# अथ यतिधर्मसंग्रहस्य विषयानुक्रमः ।


| विषयाः | पृ० | विषयाः | पृ० |
|---|---|---|---|
| मङ्गलाचरणम् ... ... | १ | संन्यासफलम् ... ... | १९ |
| संन्यासाश्रमकालनिर्णयः ... | १ | संन्यासोत्तरमात्मज्ञानार्थं गुरुसमीपगमनम् ... | २१ |
| अथ संन्यासविधिः ... | ६ | पञ्चीकरणादिमहावाक्योपदेशः ... ... ... | २२ |
| तत्र प्राजापत्यलक्षणम् ... | ,, | ब्राह्मणलक्षणम् ... ... | २३ |
| तप्तकृच्छ्रलक्षणम् ... ... | ७ | यतिना संग्राह्याणि ... | २४ |
| अष्टौ श्राद्धानि ... ... | ९ | पराशरोक्तं परमहंसलक्षणम् | २७ |
| दैवादिश्राद्धेषु देवताभिधानम् ... ... ... | ९ | यत्याचारः ... ... ... | ,, |
| श्राद्धात्परेद्युर्वपनम् ... | १० | यतेर्मोक्षसाधनम् ... ... | २८ |
| ततः सावित्रीप्रवेशनम् ... | १२ | गुरुसेवा ... ... ... | ३३ |
| ततो ब्रह्मान्वाधानम् ... | ,, | व्यासोक्तं ब्राह्मणलक्षणम् | ३७ |
| सायंतनकृत्यम् ... ... | ,, | जपप्रकाराः ... ... ... | ३९ |
| रात्रौ जागरणम् ... ... | ,, | आसनानि ... ... ... | ४० |
| ब्राह्ममुहूर्तकृत्यम् ... ... | ,, | सम्यग्दर्शनसाधनत्वेन विहितानां यमादीनां संक्षेपतः कथनम् ... ... ... | ४१ |
| आहिताग्निना प्राजापत्येष्टिः कार्या ... ... ... | ,, | सम्यग्दर्शनफलम् ... ... | ४२ |
| अथ वा वैश्वानरीयेष्टिः कार्या ... ... ... | ,, | आत्मानात्मविचारः ... | ४४ |
| एकाग्न्यनग्निविषये शौनकोक्तो विधिः ... ... | १४ | तत्र त्वंपदार्थनिर्णयः ... | ४५ |
| अनग्निविषये कपिलोक्तो विधिः ... ... ... | १५ | तत्पदार्थनिर्णयः ... ... | ४६ |
| प्रैषोक्तिप्रकारः ... ... | १६ | तयोर्वाक्यार्थविचारः ... | ,, |
| विष्णुप्रार्थनाप्रकारः ... | ,, | यतेः कर्मण्यधिकारः ... | ५० |
| दण्डलक्षणम् ... ... | १७ | मूत्रपुरीषोत्सर्गविधिः ... | ५१ |
| त्रिदण्ड्यपि स्वपरिग्रहं परित्यज्य परमहंसो भवति | १८ | मृत्तिकाग्रहणादिविचारः ... | ५२ |
| | | शौचविधिः ... ... ... | ,, |
| | | दन्तधावनम् ... ... | ५४ |

| विषयाः | पृ० |
|---|---|
| स्मस्नानादि ... ... | ५६ |
| नानान्तरं न्यासध्यानादे- चरणम् ... ... ... | ६१ |
| ततो विष्णोः शिवस्यार्चनम् | ६२ |
| अशक्तविषये स्नानविचारः | ६३ |
| आचमनविधिः ... ... | ६४ |
| आचमननिमित्तानि ... | ६६ |
| द्विराचमननिमित्तानि ... | ६७ |
| उदकाभाव आचमनानुकल्पः | ,, |
| आचमनापवादः ... ... | ,, |
| प्राणायामः ... ... ... | ६८ |
| जपविधिः ... ... ... | ७० |
| श्रवणविधिः ... ... | ७१ |
| श्रवणफलम् ... ... | ७२ |
| भिक्षाचर्या ... ... ... | ७४ |
| तत्र परमहंसस्य विशेषः ... | ७५ |
| यतिपात्राणि ... ... | ७७ |
| भिक्षाटने कर्तव्यता ... | ७९ |
| भिक्षाप्रशंसा ... ... | ८० |
| भिक्षाशनानन्तरं पुराणश्रव- णम् ... ... ... | ८८ |
| तस्य फलम् ... ... | ,, |
| पर्यटनविधिः ... ... | ९३ |
| क्षौरविधिः ... ... ... | ९४ |
| व्यासपूजाप्रकारः ... ... | ९५ |
| चातुर्मास्य एकत्र वासविषये संकल्पः ... ... | ९६ |
| नमस्कारविधिः ... ... | ९७ |
| वपनक्रियायां विशेषः ... | ९९ |

| विषयाः | पृ० |
|---|---|
| अभ्यागताचारः ... ... | १०० |
| तत्र पर्यङ्कशौचविधिः ... | १०२ |
| योगपट्टविधिः ... ... | ,, |
| यतीनां निषिद्धानि ... | १०३ |
| प्रायश्चित्तानि ... ... | ११२ |
| यतिसेवाप्रशंसा ... ... | १२७ |
| यतीनां संस्कारविधिः ... | १३४ |
| माधूकरादिव्यतिरिक्तान्ने दोषदर्शकानि वचनानि... | १३६ |
| श्राद्धभोजननिषेधः ... | १३७ |
| पूर्ववद्भिक्षाप्रशंसा ... ... | १३९ |
| यतिभिरशनवसनादि- चिन्ता न कार्या ... ... | १४० |
| भिक्षुकैर्निवृत्तिनिष्ठायामेवाऽऽ- दरः कार्यो न तु प्रवृत्तिनि- ष्ठायाम् ... ... ... | १४१ |
| ध्यानप्रशंसा ... ... | १५१ |
| ध्यानाधिकारः ... ... | १५२ |
| संन्यासाधिकारः ... ... | १५४ |
| संन्यासस्य कृतार्थता ... | ,, |
| यतिभिः श्रवणादावेवाऽऽ- दरः कार्यस्तद्व्यतिरिक्तानु- ष्ठाने दोषः ... ... | १५६ |
| संन्यासिनां वाक्यविचारण- मेव मुख्यो धर्मः ... ... | ,, |
| श्रवणादिप्रशंसा ... ... | १५९ |
| श्रवणमर्यादाकालः... ... | ,, |
| जीवन्मुक्तानां लक्षणम् ... | १६० |
| ज्ञानोत्पत्तिसाधनम् ... | १६२ |


इति यतिधर्मसंग्रहस्य विषयानुक्रमः ।

## आदर्शपुस्तकोल्लेखपत्रिका ।

अस्य यतिधर्मसंग्रहस्य पुस्तकानि यैः परहितैकपरतया संस्करणार्थं प्रदत्तानि तेषां नामग्रामादिकं पुस्तकानां संज्ञाश्च कृतज्ञतया प्रदर्श्यन्ते—

(क.) इति संज्ञितम्—वाई क्षेत्रनिवासिनां वे० शा० रा० बाळंभट्ट अभ्यंकर इत्येतेषाम् ।

(ख.) इति संज्ञितम्—आनन्दाश्रमस्थम्

(ग.) इति संज्ञितम्—पुण्यपत्तनस्थानां वे० शा० रा० काशीनाथशास्त्री आगाशे इत्येतेषाम् । अस्य लेखनकालः शके १७८५

(घ.) इति संज्ञितम्—शृंगेरीपुरनिवासिश्रीमच्छंकराचार्यपुस्तकसंग्रहालयस्थम् । अस्य लेखनकालः शके १६९३

समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका ।

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ६०

विश्वेश्वरसरस्वतीकृतः

# यतिधर्मसंग्रहः ।

एतत्पुस्तकं

वे० शा० रा० गोखले इत्युपाह्वैर्गणेशशास्त्रिभिः संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८३१

खिस्ताब्दाः १९०९



मूल्यं पादोनं रूपकद्वयम् (१८१२)

ॐ तत्सद्ब्रह्मणे नमः ।

विश्वेश्वरसरस्वतीकृतो

# यतिधर्मसंग्रहः ।

प्रणम्य विष्णुमात्मानं सच्चिदानन्दमुक्तिदम् ।
गुरुं सर्व[1]ज्ञविश्वेशं मायया धृतविग्रहम् ॥ १ ॥
विश्वेश्वरसरस्वत्या क्रियते वेदमानतः ।
यतेः परमहंसस्य धर्माणामेष संग्रहः ॥ २ ॥

तत्र संन्यासाश्रम[2]कालनिर्णयो जाबालश्रुत्या विहितः—" ब्रह्मचर्यं समाप्य गृही भवेत् । गृही भूत्वा वनी भवेत् । वनी भूत्वा प्रव्रजेत् " * इत्याश्रमसमुच्चयः । तथा व्यवस्थितविकल्पोऽपि—" यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् " इति । [ खण्डः ४ ] अव्यवस्थितविकल्पोऽपि गृहाद्वा वनाद्वेति । आरुण्युपनिषदि च—" गृहस्थो ब्रह्मचारी वा वानप्रस्थो वा लौकिकाग्नीनुदराग्नौ समारोपयेत् " इति [ ख० २ ] । तथा " +कुटीचको ब्रह्मचारी कुटुम्बं विसृजेद्दण्डाँ[3]ल्लौकिकाग्नीन्विसृजेत् " इति [ ख० २ ] । कुटीचकबहूदकसंन्यासिनोः पारमहंस्यं विहितं जाबालश्रुत्या—" त्रिदण्डं कमण्डलुं शिक्यं पात्रं जलपवित्रं शिखां यज्ञोपवीतं चेत्येतत्सर्वं भूः स्वाहेत्यप्सु परित्यज्याऽऽत्मानमन्विच्छेत् " इति [ ख० ६ ] आरुण्युपनिषदि— " वेदार्थं यो विद्वान्सोपनयनादू[4]र्ध्वं[5] स तानि प्राग्वा त्यजेत्पितरं पुत्रमग्न्युपवीतं कर्म कलत्रं चान्यदपि" इति [ख०५] ।

स्मृतौ च[6]—बुद्ध्वा कर्माणि यत्कामये[7]त यमिच्छेत्तमावसेदिति ।

अङ्गिराः—वनवासात्परिश्रान्तः प्रव्रजेद्विधिपूर्वकम् ।
व्याध्याविष्टो विरक्तो वा ब्रह्मवित्संन्यसेद्द्विजः ॥

---

* इत्यारभ्य ब्रह्मचर्यादेव प्रव्रजेदित्यन्तग्रन्थो ग. पुस्तके नास्ति । + आरुण्युपनिषद्येतादृशः पाठः—कुटीचरो ब्रह्मचारी कुटुम्बं विसृजेत्पात्रं विसृजेत्पवित्रं विसृजेद्दण्डांश्च लौकिकाग्नींश्च विसृजेत् । इति ।

१ ग. °र्वज्ञ वि° । २ ख. °मकालानि° । ३ क °द्दण्डा लौकि° । ४ क. °दूर्ध्वमेतानि प्रागुसृजे° । ५ ग. °र्ध्वं प्रा° । ६ ग. प. च । बुद्ध्वा क° । क. च । बद्ध्वा कर्माणि कारयेत्तदारमेद्यमि° । ७ ग. °येत्तदारमेद्यामि° । घ. °येत तदारमेत यामि ।

संन्यसेद्ब्रह्मचर्येण संन्यसेद्वा गृहादपि ।
वनाद्वा संन्यसेद्विद्वानातुरो वाऽथ दुःखितः ॥
आतुराणां विशेषोऽस्ति न विधिर्नैव च क्रिया ।
प्रैषमात्रस्तु संन्यास आतुराणां विधीयते ॥
यदा मनसि संजातं वैतृष्ण्यं सर्ववस्तुषु ।
तदा संन्यासमिच्छन्ति पतितः स्याद्विपर्ययात् ॥

यमः—चीर्णवेदव्रतो विद्वान्ब्राह्मणो मोक्षमाश्रयेत् ।
समः सर्वेषु भूतेषु चरेषु स्थावरेषु च ॥
उत्पन्नज्ञानविज्ञानो वैराग्यं परमं गतः ।
प्रव्रजेद्ब्रह्मचर्यात्तु यदीच्छेत्परमां गतिम् ॥
जातपुत्रो गृहस्थो वा विदितात्मा जितेन्द्रियः ।

याज्ञवल्क्यः—अधीतवेदो जपकृत्पुत्रवानन्नदोऽग्निमान् ॥
शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा ।

मनुः—कषायं पाचयित्वा तु श्रेणिस्थानेषु च त्रिषु ॥
प्रव्रजेत्तु परं स्थानं पारिव्राज्यमनुत्तमम् ।

इत्यादिसर्ववाक्यपर्यालोचनयाऽयमर्थोऽवगम्यते । अध्ययनैनियोग-निवृत्त्युत्तरकालं यस्य पुरुषस्य यस्यामवस्थायां वैराग्यं जायते तस्य तत एव संन्यासेऽधिकार इति ।

तथा श्रुतिस्मृती " यदहरेव विरजेत्तदहरेव प्रव्रजेत् " इति [ जाबा० ख० ४ ]।

कात्यायनः—ब्रह्मचर्याद्गृहाद्वाऽपि वनाद्वा संन्यसेद्बुधः ।
पुत्रेषु भार्यां निक्षिप्य मृतपत्नीक एव वा ॥

व्यासः—ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा पुनः ।
विरक्तः सर्वकामेभ्यः पारिव्राज्यं समाश्रयेत् ॥
*अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकम् ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥

इति निषेधे सत्यपि प्रवृत्तिमाह—

---

* एतद्वचनं न विद्यते ग. पुस्तके ।

१ ग. घ. °र्थये । य° । २ ग. °यमेवार्थोऽ° । ३ क. ख. °नवियो° ।

यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते ।
ताव[1]न्न्यासोऽग्निहोत्रं च कर्तव्यं तु कलौ युगे ॥

विष्णुपुराणे—यत्कृते दशभिर्वर्षैस्त्रेता[2]यां हायनेन तत् ।
द्वाप[3]रे तत्तु मासेन अहोरात्रेण तत्कलौ ॥
तपसो ब्रह्मचर्यस्य जपादेश्च फलं द्वि[4]जाः ।
प्राप्नोति पुरुषस्तेन कलिः साध्विति भाषितम् ॥ इति ।

कलावल्पेन कालेन ब्रह्मचर्यस्य जपादेरधिकं फलं वदन्ब्रह्मचर्यादिप्रधानस्य पारिव्राज्यस्य कलावनुष्ठेयत्वं सूचयति ।

मनुः—ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥
अधीत्य विधिवद्वेदान्पुत्रांश्चोत्पाद्य धर्मतः ।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् * ॥

यस्य दृष्टानुश्रविके[5]विषयेष्वादावेव वैराग्यं न जायते स ए[6]तत्सर्वं यथाशास्त्रं कृत्वा संन्यसेन्नान्यथेति श्लोकयोरर्थः । अन्यथा ब्रह्मचर्यादेव प्रव्रजेदित्यादिप्रत्यक्षवेदवचनविरोधादप्रामाण्यप्रसङ्गात् । व्रजत्यध इति मोक्षादर्वाङ्गुमुक्षुः सत्यलोकादि[7]षु प्रवर्तत इत्यर्थः—“ न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ” इति भगवद्वचनात् । अनाश्रमिणामपि जाबालश्रुत्या संन्यासो विहितः । “ अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत् ” [ ख० ४ ] तथा—“ यद्याऽऽतुरः स्यान्मनसा वाचा वा संन्यसेत् ” [ जाबा० ख० ५ ] ।

सौरपुराणे—यदा मनसि वैराग्यं जायते सर्ववस्तुषु ।
तदैव संन्यसेद्विद्वानन्यथा पतितो भवेत् ॥

बृहस्पतिः—यस्मिन्कामाः प्रवि[8]शन्ति विषयेभ्योपसंहृताः ।
विषयान्न पुनर्यान्ति स कैवल्याश्रमे वसेत् ॥
यस्मिन्क्रोधः शमं याति वि[9]फलः सम्यगुत्थितः ।
आकाशेऽग्निर्यथा क्षिप्तः स कैवल्याश्रमे वसेत् ॥

---

* इत उत्तरमेतद्वचनं ख. पुस्तके—दशभिर्जन्मभिर्वेदा वेदार्थः शतजन्मभिः । सहस्रजन्मभिः सोमः संन्यासः कोटिजन्मभिः ।

---

१ क. °वत्संन्यासोऽग्निहोत्रं क° । २ ग. °यां ह्यय° । ३ ख. °रे यत्तु मा° । ४ क. ग. घ. द्विजः । ५ ग. °कसर्वेषु विषयेष्वादौ वै° । ६ ख. एव त° । ७ ख. ग. घ. °षु व° । ८ ख. ग. °शन्ते वि° । ९ क. °विकलः ।

अङ्गिराः—उत्पन्ने संकटे घोरे चौरव्याघ्रादिगोचरे ।
भयभीतस्य संन्यासमङ्गिरा मुनिरब्रवीत् ॥
विरक्तः संन्यसेद्विद्वानानिष्ट्वाऽपि द्विजोत्तमः ।
प्रकर्तुमप्यशक्तोऽपि जुहोतियजतिक्रियाः ॥
अन्धः पङ्गुर्दरिद्रो वा विरक्तः संन्यसेद्विजः ।
सर्वेषामेव वैराग्यं संन्यासे तु विधीयते ॥
पतत्येवाविरक्तो यः संन्यासं कर्तुमिच्छति ।
पुनर्दारक्रियाभावान्मृतभार्यः परिव्रजेत् ॥

पराशरः—पारिव्राज्यं तु वैराग्यात्कर्तव्यं विधुरादिभिः ।
विधिना तत्र कुर्वीत संन्यासमिह बुद्धिमान् ॥

बृहस्पतिः-संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया ।
प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः ॥

अत्रिः—न तावन्मुच्यते दुःखाज्जन्ममृत्योश्च बन्धनात् ।
यावन्न धारयेद्विप्रो वैष्णवं लिङ्गमादरात् ॥

विष्णुः—मुखजानामयं धर्मो वैष्णवं लिङ्गधारणम् ।
बाहुजातोरुजातानां नायं धर्मो विधीयते ॥

व्यासः—परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि ।
सर्वैषणाविनिर्मुक्तः स भैक्षं भोक्तुमर्हति ॥
यस्मिन्क्षान्तिः शमः शौचं सत्यं संतोष आर्जवम् ।
अकिंचनमदम्भं च स कैवल्याश्रमे वसेत् ।
यदा न कुरुते भावं सर्वभूतेषु पापकम् ॥
कर्मणा मनसा वाचा तदा भवति भैक्षभुक् ।

संवर्तः—पूजितो वन्दितश्चैव सुप्रसन्नो भवेद्यथा ।
तथा चेत्ताड्यमानस्तु तदा भवति भैक्षभुक् ॥

क्रतुः—अहमेवाक्षरं ब्रह्म वासुदेवाख्यमव्ययम् ।
इति भावो ध्रुवो यस्य तदा भवति भैक्षभुक् ॥

संवर्तः-भावितैः करणैश्चायं बहुसंसारयोनिषु ।
आसादयति शुद्धात्मा मोक्षं वै चतुराश्रमे ॥

१ °र्तुमथ श° । २ ग. °वान्मुमुक्षुर्यः । ३ न. °न्यासं सह । ४ ग. घ. °मेव परं ब्र° । ५ घ. °द्वो । ६ क. घ. °कारणैश्च° । ७ क. ग. वै चतुर्थाश्र° । ८ ख. °तुरीयाश्र° ।

सुमन्तुः(न्तुना)—आपत्काले तु संन्यासः कर्तव्य इति शिष्यते ।
जरयाऽभिपरीतेन शत्रुभिर्व्यथितेन च ॥
आतुराणां च संन्यासे न विधिर्नैव च क्रिया ।
प्रैषमात्रं समुच्चार्य संन्यासं तत्र कारयेत् ॥
संन्यस्तोऽहमिति ब्रूयात्[2]सवनेषु त्रिषु क्रमात् ।
त्रीन्वारांस्तु त्रिलोकात्मा शुभाशुभविशुद्धये ॥
यत्किंचिद्बन्धकं कर्म कृतमज्ञानतो मया ।
प्रमादालस्यदोषाद्यत्तत्सर्वं संत्यजाम्यहम् ॥
एवं संचिन्त्य भूतेभ्यो दद्यादभयदक्षिणाम् ।
पद्भ्यां कराभ्यां विहरन्नाहं वाक्कायमानसैः ॥
करिष्ये प्राणिनां हिंसां प्राणिनः सन्तु निर्भयाः ।

इत्यातुराणां संन्यासं संकल्प्य सावित्रीप्रवेशनपाणिहोमप्रैषोच्चारणाभयदानानि विहितानि ।

गीतासु—आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥

व्यासः—प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम् ।
तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ॥

मनुः—दशलक्षणकं धर्ममनुतिष्ठन्समाहितः ।
वेदान्तान्विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः ॥

जाबाल[3]ः—संन्यासे निश्चयं कृत्वा पुनर्न च करोति यः ।
स कुर्यात्कृच्छ्रमश्रान्तं षण्मासा[4]न्प्रत्यनन्तरम् ॥
संन्यासं पातयेद्यस्तु पतितं न्यासयेत्तु यः ।
संन्यासविघ्नकर्ता च त्रीनेतान्पतितान्विदुः ॥

दक्षः—[6]तस्मात्त्यक्तकषायेण कर्तव्यं दण्डधारणम् ।
इतरस्तु न शक्नोति विषयैरपहीयते ॥

अथानधिकारी ।
आरूढपतितापत्यं कुनखी श्यावदन्तकः ।
[7]क्षयक्षीणोऽङ्गविकलो न तु संन्यासमर्हति ॥

---

१ ग. क्रियाः । प्रेष° । २ क. ख. °याद्वचने° । ३ ग. जाबालिः । ४ ग. °सात्प्रत्य° । ५ क. ११ । सं° । ६ घ. °तस्मात्त्यक्तकषाये° । ७ ख. °ध्यार्याकृताङ्ग° ।

संप्रत्यवसितानां च महापातकिनां तथा ।
व्रात्यानामभिशस्तानां संन्यासं नैव कारयेत् ॥
व्रतयज्ञतपोदानहोमस्वाध्यायवर्जितम् ।
सत्यशौचाश्रमभ्रष्टं संन्यासं नैव कारयेत् ।

बृहस्पतिः—अतीतान्न स्मरेद्भोगांस्तथैवानागतानपि ॥
प्राप्तांश्च नाभिनन्देद्यः स कैवल्याश्रमे वसेत् ।
श्रद्धा ध्यानं तपः शौचं यस्य वित्तं[1] चतुष्टयम् ॥
स्मरणं चाद्वितीयस्य स कैवल्याश्रमे वसेत् ।
अन्तःस्थानीन्द्रियाण्यन्तर्बहिष्ठान्विषयान्बहिः ॥
शक्नोति[2] यः सदा कर्तुं स कैवल्याश्रमे वसेत् ।

व्यासः[3](सेन)—यान्यतीतानि जन्मानि तेषु नूनं कृतं भवेत् ॥
यत्कृत्यं पुरुषेणेह नान्यथा ब्रह्मणि स्थितिः ।
तामासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चितः ॥
त्रिष्वाश्रमेषु को न्वर्थो भवेत्परमभीप्सतः ।

इत्यादिना विदुषो ब्रह्मणि स्थितस्य पारिव्राज्यं दर्शितम् ।
बह्वृचपरिशिष्टे—"यथोक्तचारिणं भिक्षुं गुरुमेकं परिग्रहेत् ।
यतिवृन्दैर्[4]रनुज्ञातो मोक्षाश्रममुपाश्रयेत् " इति ॥

अथ संन्यासविधिः। तत्र बौधायनः—'अनाश्रमी चतुरः कृच्छ्रानात्म शुद्ध्यर्थं विदध्यादाश्रमी तप्तकृच्छ्रमेकम् 'इति। कृच्छ्रानिति प्राजापत्यकृच्छ्रान् । तथा च बह्वृचपरिशिष्टे—' मुमुक्षुरात्मशुद्ध्य एकं[5] तप्तकृच्छ्रं कृत्वाऽनाश्रमी चतुरः प्राजापत्यान् ' इति । अनेन कृच्छ्राचरणेनाऽऽत्मशुद्धिद्वारा संन्यासयोग्यता भवति ।

तथा च स्मृत्यर्थसारे—

कृच्छ्रांस्तु चतुरः कृत्वा पावनार्थमनाश्रमी ।
आश्रमी चेत्तप्तकृच्छ्रं तेनासौ योग्यतां व्रजेत् ॥ इति ।

प्राजापत्यलक्षणं मनुनोक्तम्—

त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ।
त्र्यहं परं तु नाश्नीयात्प्राजापत्योऽयमुच्यते ॥ इति ।

---

१ ग. घ. °वित्तच° । २ ख. शक्तितो यः । ३ ग. घ. °सः । यान्यतोऽन्यानि ज° । ४ °रनुगतो । ५ ख. °नैकक्रु° ।

याज्ञवल्क्यः—एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन चैवायं पादकृच्छ्रः प्रकीर्तितः ॥
यथाकथंचित्त्रिगुणः प्राजापत्योऽयमुच्यते ।

वसिष्ठः—अहः प्रातरहर्नक्तमहरेकमयाचितम् ।
अहः पराकं तत्रैकमेवं चतुरहौ परौ ॥ इति ।

पराक उपवासः । एकभक्तं नक्तमयाचितमुपवास इति त्रिरावृत्त्या द्वादशदिनसाध्यः प्राजापत्यः ।

अत्र च ग्राससंख्यानियमः पराशरेण दर्शितः—

सायं तु द्वादश ग्रासाः प्रातः पञ्चदश स्मृताः ।
चतुर्विंशतिरायाच्याः परं निरशनं स्मृतम् । इति ॥

आपस्तम्बेन त्वन्यथोक्तम्—

सायं द्वाविंशतिर्ग्रासाः प्रातः षड्विंशतिः स्मृताः ।
चतुर्विंशतिरायाच्याः परे[1] निरशनास्त्रयः ॥
कुक्कुटाण्डप्रमाणस्तु यथा वाऽऽस्ये विशेत्सुखम् । इति ।

अनयोश्च[2] कल्पयोः शक्त्यपेक्षो विकल्पः ।

तप्तकृच्छ्रमाह याज्ञवल्क्यः—

तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत् ।
एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः ॥

मनुना तु द्वादशरात्रनिर्वृत्त्याऽभिहितः—

* तप्तकृच्छ्रं चरन्विप्रो जलक्षीरघृतानिलान् ।
प्रतित्र्यहं पिबेदुष्णान्सकृत्स्नायात्[3] समाहितः ॥ इति ।

क्षीरादिपरिमाणं पराशरेणोक्तं द्रष्टव्यम्—

अपां पिबेत्तु त्रिपलं द्विपलं तु पयः पिबेत् ।
पलमेकं पिबेत्सर्पिस्त्रिरात्रं चोष्णमारुतम् ॥ इति ।

त्रिरात्रं चोष्णमारुतमिति त्रिरात्रस्य पूरणमुष्णोदकक्काथं पिबेदित्यर्थः । कृच्छ्राद्यनुष्ठाने साधारणेतिकर्तव्यता मनुनोक्ता—

---

* एतद्वचनं न विद्यते ग. पुस्तके ।

१ ग. परं । २ क. ग. घ. °श्च विक । ३ घ. कृत्सायं स° ।

महाव्याहृतिभिर्होमः कर्तव्यः स्वयमन्वहम् ।
अहिंसासत्यमक्रोधमार्जवं च समाचरेत् ॥
त्रिरह्नस्त्रिर्निशायां तु सवासा जलमाविशेत् ।
स्त्रीशूद्रपतितांश्चैव नाभिभाषेत कर्हिचित् ॥
स्नानासनाभ्यां विहरन्नक्रोधश्च शयीत वा ।
ब्रह्मचारी व्रती च स्याद्गुरुदेवद्विजार्चकः ॥
सावित्रीं च जपेन्नित्यं पवित्राणि च शक्तितः ।
सर्वेष्वेव व्रतेष्वेवं प्रायश्चित्तार्थमादृतः ॥ इति ।
प्राजापत्यक्रियाशक्तौ धेनुं दद्याद्द्विजोत्तमः ।
धेनोरभावे दातव्यं मूल्यं तुल्यमसंशयः ॥ इति ।

संपूर्णदानाशक्तावप्यनुकल्पमाह—

गवामभावे*निष्कं स्यात्तदर्धं पादमेव च । इति ।

प्रत्याम्नायान्तरमप्याह पराशरः—

कृच्छ्रोऽयुतं तु गायत्र्या उपवासस्तथैव च ।
धेनुप्रदानं विप्राय सममेतच्चतुष्टयम् ॥ इति ।

तथा षट्त्रिंशन्मते—कृच्छ्रोऽयुतं च गायत्र्या द्वादशब्रह्मभोजनम्
तिलहोमसहस्रं च सममेतच्चतुष्टयम् ॥ इति ।

तथा—धेनुर्निष्कस्तदर्धार्धप्राणायामशतद्वयम् ।
तिलहोमसहस्रं च वेदाध्ययनमेव च ॥
विप्रा द्वादश वा भोज्याः पावकेष्टिस्तथैव च । इति ।
तप्तकृच्छ्रं तु प्राजापत्यद्वयप्रत्याम्नायकल्पम् ।
मुख्यकल्पे समर्थेन वाऽनुकल्पो न स्वीकर्तव्यः ॥

तथा च मनुः—प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।
न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् ॥ इति ।

कात्यायनः—कुर्यात्कृच्छ्राणि चत्वारि संन्यासेप्सुरनाश्रमी ।
आश्रमी कृच्छ्रमेकं तु कृत्वा संन्यासमर्हति ॥

उक्तं पुरश्चरणमादौ कृत्वा शुद्धेन कायेनाष्टौ श्राद्धानि निर्वपेदि

* घ. पुस्तके समासे—निष्कमिति चत्वारिंशन्माषपरिमितं सुवर्णं मुख्यम् । तदभावे तन्निष्कम् । अशक्तौ निष्कार्धम् । तत्पादमात्रं वा । अत्यशक्तौ पादस्यार्धमपि मूल्यमित्यपि को

१ ग. °दर्धश्च प्रा°। २ ग. °सर्वाणि ।

अत्रिः—दैवमार्षं ततो दिव्यं मानुष्यं[1] भौतिकं ततः ।
पितॄणां दिव्यमातॄणामात्मनो वृद्धि[2]तत्परम् ॥

शौनकः—दैवं चैवाऽऽर्षकं चैव दिव्यं मानुष्यमेव च ।
भूतश्राद्धं पितृश्राद्धं मातॄणामात्मनस्तथा ॥
एकैकस्मिन्दिने कुर्यादेकैकं श्राद्धमर्थ[3]वत् ।
नान्दीमुख[4]विधानेन विधिरेषां[5] प्रकीर्तितः ॥ इति ।

स एव दैवादिश्राद्धेषु देवता आह—

वसवोऽष्टौ स्मृतास्तत्र रुद्रा एकादशापि वा ।
तथैव द्वादशाऽऽदित्या दैवश्राद्धे[6]षु देवताः ॥
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
प्रचेताश्च वसिष्ठश्च आर्षे[7] च भृगुनारदौ ॥
दिव्ये हिरण्यगर्भश्च वैराजपतिरेव च ।
सनकश्च सनन्दश्च तृतीयश्च सनातनः ॥
कपिलश्चाऽऽसुरश्चैव[8] वोढुः पञ्चशिखस्तथा ।
एते मानुषके[9] श्राद्धे मनुष्याः सप्त देवताः ॥
पृथिव्यापस्तथा तेजो वायुराकाशमेव च ।
एतानि पञ्च भूतानि भूतश्राद्धे तु देवताः ॥
पितृश्राद्धे कव्यवाडनलः[10] सोमोऽर्यमा तथा ।
अग्निष्वात्ता बर्हिषदः सोमपाश्चैव देवताः ॥
* गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातृश्राद्धेषु देवताः ॥
आत्मश्राद्धे देवता तु परमात्मा प्रकीर्तितः ॥ इति ।

अत्रिः—कर्ता निरग्निश्चेत्—

लौकिकाग्नौ तदा कुर्याच्छ्राद्धार्थी पचनादिकम् ।
पूर्वेद्युस्तदहर्वा[11]ऽपि श्राद्धे विप्रान्निमन्त्रयेत् ॥
कृत्वा तु संस्कृतं पाकं हविष्यं स्वादुभोजनम् ।
हृदि यज्ञेश्वरं ध्यायेद्देवं नारायणं प्रभुम् ॥

---

* एतन्न विद्यते ग. पुस्तके ।

१ ख. मानुषं । २ ग. °द्धिवत्पर° । ३ ग. घ. °र्थवित् । ४ ग. °मुख्ये वि° । ५ ग. °रेष प्र° । ६ ग. °द्धे तु दे° । ७ क. घ. °र्षे मभृगुनारदः । दि° । ८ घ. °सुरिश्चै° । ९ ग. घ. °नुष्यके श्राद्धे मानु° । १० क. °वाहन° । ख. °वाहान° । ग. वाहनं वै सो° । ११ ग. °दहान्भक्त्या श्रा° ।

आरभेत्सर्वकर्माणि स्नानादीनि विधानतः ।
तर्पयेदम्भसा स्नात्वा मन्त्रपूर्वं द्विजोत्तमः ॥
देवानृषीन्मनुष्यांश्च भूतानि च यथाक्रमम् ।
तर्पयित्वाऽम्भसा सर्वान्पुनः श्राद्धेन तर्पयेत् ॥
पार्वणं च तथा वृद्ध्या श्राद्धं कुर्याद्यथाविधि ।
दत्त्वा नान्दीमुखेभ्यश्च पिण्डानक्षतसंयुतान् ॥
श्राद्धे देवान्नमस्कृत्य यथोक्तं श्रुतिशासनात् ।
तत्राष्टसु क्रमाद्देवा वसवोऽथ प्रजापतिः ॥
हिरण्यगर्भोऽथ विराडात्मा दैवे समस्य तु ।
आर्षे मरीचिप्रमुखा दिव्ये च विनतात्मजाः ॥
स्कन्दः प्रजेशस्तत्राऽऽत्मा मानुषे सनकादयः ।
कव्यवाहमुखाः पित्र्ये मातृके दिव्यमातरः ॥
युग्माः स्युर्दैवपूर्वेषु ब्राह्मणा दैववद्विधिः ।
एकैको मन्त्र[1]वत्पिण्डो देयस्तूष्णीमथापरः ॥
सर्वमन्त्रेषु कर्तव्यं नान्दीमुखविशेषणम् ।
उत्थाप्य च ततो विद्वान्हृष्टपुष्टेन चेतसा ॥
प्रदक्षिणं ततः कृत्वा नमस्कृत्य द्विजोत्तमान् ।
क्षन्तव्यमिति तान्ब्रूयात्प्रणम्य शिरसा ततः ॥
संन्यासार्थं मया श्राद्धं कृतमेतद्द्विजोत्तमाः ।
अनुज्ञां प्राप्य युष्माकं सिद्धिं यास्यामि शाश्वतीम् ॥

दत्तात्रेयः—दैवार्षमानुषं भूतं पितृमातृस्वयंभुवम् ।
श्राद्धं परात्मनः कृत्वा वृद्धौ चापि चतुष्टयम् ॥

ततः परेद्युः पुण्याहवाचनपूर्वकं वपनं कुर्यात् । तथा च शौनकः—
पूर्वेद्युर्नान्दीमुखं कृत्वा, ब्राह्मणान्भोजयित्वा, पुण्याहं वाचयित्
केशश्मश्रुलोमनखानि वापयित्वा, यथाविधि स्नात्वा, होमादिद्रव्यव्यां
रिक्तं द्रव्यजातं पुत्रादिभ्यो दत्त्वा, दण्दा[2]दीन्संनिधाय, देवायतने ग्र
वा पुलिने वाऽरण्ये वा स्थि[3]त्वा, ब्रह्मणे नमः । इन्द्राय नमः । सूय
नमः । आत्मने नमः । अन्तरात्मने नमः । परमात्मने नम इति ब्रह्
ञ्जलिं कृत्वा, मानसं जपित्वा, उपस्पृश्य, दर्भाञ्जलिं कृत्वा, वेदा
ञ्जपित्वा, सक्तुमुष्टिं प्राश्याऽऽचम्य, ॐ भूः सावित्रीं प्रविशामि

१ क. ग. °न्त्रवित्पि° । २ ख. °दीन्सविधा° । ग. °दीन्निधा° । ३ ख. कारयित्वा ।

तथा वरेण्यम् । ॐ भुवः सावित्रीं प्रविशामि । भर्गो देवस्य धीमहि । सावित्रीं प्रविशामि । धियो यो नः प्रचोदयात् । ॐ भूर्भुवः ावित्रीं प्रविशामि । तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो .ः प्रचोदयात् । इति जपित्वा किंचन प्राश्य, पुरस्तादादित्यस्या- ।यादाज्यं विलाप्योत्पूय, स्रुचि चतुर्गृहीतं गृहीत्वा, समिद्धेऽग्नौ ॐ , स्वाहेति पूर्णाहुतिं हुत्वा, सायमग्निकार्यं कृत्वाऽग्न्युत्तरदेशे दर्भेषु त्राणि सादयित्वाऽग्निदक्षिणदेशे दर्भान्संस्तीर्य, कृष्णाजिनं चान्त- ीय, एतस्यां रात्र्यां जागरं कृत्वेति । अत्र विशेषमाह बौधायनः— ाह्मणानन्त आवेश्य पुण्याहं स्वस्ति ऋद्धिरिति वाचयित्वेति । अन्ते समीप आवेश्य उपवेश्य[3], ततो वपनं कुर्यात् । कात्यायनः—

आपो हि ष्ठा इति द्वाभ्यां श्मश्रुलोमनखानि च ।
गोदानकविधानेन सर्वमन्त्रान्नियोजयेत् ॥

सप्ताष्ट केशाञ्छिखार्थं स्थापयेत् । तथा च संप्रदायविदः—

शेषस्य कर्मणः सिध्द्यै केशान्सप्ताष्ट वा द्विजः ।
संरक्ष्य वापयेत्सर्वं केशश्मश्रुनखानि च ॥ इति ।

गोभिलः—ततः समाचरेत्स्नानं हेमरूप्यकुशाम्भसा ।

कृत्वा तु वपनं विद्वान्भवेन्मुण्डोऽथवा शिखी ॥
स्नानमब्दैवतैः कृत्वा तर्पयेत्पितृदेवताः ।
ऋषींश्छन्दांसि वेदांश्च मनुष्यांश्च यथाविधि ॥

तत आगत्य देवतायतनादावुपविश्य दक्षिणजानुन्युत्तानं वामहस्तं कृत्वा तत्र द्वे पवित्रे निधाय तदुपर्युत्तानेन न्युब्जेन दक्षिणहस्तेन पिदध्यादिति ब्रह्माञ्जलिः । तं ब्रह्माञ्जलिं कुर्यात् । जपेच्च ब्रह्मणे नम इत्यादिमन्त्रान् । तत आचम्य वेदादीञ्जपेत् । *(अप उपस्पृश्य दर्भा-ञ्जलिं कृत्वा वेदादीञ्जपित्वेति शौनकवचनात् । ) ततः सक्तुमुष्टिं प्रण-वेन प्राश्याऽऽचम्य मन्त्रैर्नाभिमभिमन्त्रयेत, तदुक्तं बह्वृचपरिशिष्टे— अथ सक्तून्प्राश्याऽऽचम्य नाभिमभिमन्त्रयेत, आत्मने स्वाहाऽन्तरात्मने

* एतच्चिह्नान्तर्गतग्रन्थः क पुस्तके न विद्यते ।

१ ग. गरणं कृ° । २ ख. अथ । ३ ख. श्य गतंव° । ४ ग. परि दक्षिणह° । ५ क. °ञ्जलिं कु° । ६ क. °म्य नाभि° । ७ ग. °हा प्र° ।

स्वाहा प्रजापतये स्वाहेति । ततः पयोदधिघृतानि त्रिवृत्कृता। दसीति मन्त्रेण प्रथमं प्राश्नीयात् । प्रवृदसीति द्वितीयम् । विदृ तृतीयम् । तत आपः पुनन्तु पृथिवीमित्युदकं प्राश्नीयात् । तत उ संकल्पयेत् । तदुक्तं बौधायनेन—ग्रामान्ते ग्रामसीमान्तेऽग्न्यगारे वा पयोदधिसंयुतं त्रिः प्राश्योपवसेत्, त्रिवृदसीति त्रिभिर्मन्त्रैः । सकृ आपः पुनन्त्वितीति पयआज्यालाभेऽपः प्राश्नीयात् । तदुक्तं बह्वृ परिशिष्टे—अथ पयोदधिसर्पिस्त्रिवृत्प्राश्याऽऽचामेदपस्तदलाभ इति ततः सावित्रीं प्रविशेत् । तत्प्रकारमाहतुर्बह्वृचपरिशिष्टबौधायनौ- ॐ भूः सावित्रीं प्रविशामि तत्सवितुर्वरेण्यम् । ॐ भुवः सावित्रीं प्रवि शामि भर्गो देवस्य धीमहि । ॐ स्वः सावित्रीं प्रविशामि धियो नः प्रचोदयात् । ॐ भूर्भुवः स्वः सावित्रीं प्रविशामि सर्वां गाय जपेत् । ततः किंचनापः प्राश्य ततोऽस्तमयात्पूर्वमाहिताग्निश्चेदाह नीये, एकाग्निश्चेदौपासनाग्नौ, ब्रह्मचारी चेल्लौकिकेऽग्नौ, विधुरश्चेत्पूर्व क्तेन पृष्टो दिविविधानेनोत्पादितेऽग्नौ, स्रुवेण स्रुच्याज्यं चतुर्गृहीत स्रुचा ॐ स्वाहेति जुहुयात् । एतद्ब्रह्मान्वाधानम् । तत्र बौधायनः- पुराऽऽदित्यस्यास्तमयाद्गार्हपत्यमुपसमाधायान्वाहार्यपचनमाहृत्य ज्व न्तमाहवनीयमुद्धृत्य गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृह गृहीत्वा समिद्धे ह्याहवनीये पूर्णाहुतिं जुहोत्यों स्वाहेत्येतद्ब्रह्मान्वाधा मिति विज्ञायत इति ।

तथाऽऽह कात्यायनः—

औपासनं ह्यावसथ्यं पृष्टो दिविजपेन वा ।
लोकाग्निमितरं वाऽपि श्रद्धावान्स यदा भवेत् ॥

इत्युपक्रम्य—तस्मिन्होमं महायज्ञान्कुर्यात्पक्षादि कर्म च ।
संन्यासार्थी तथा कुर्यात्पाकयज्ञादिकानपि ॥

इत्युक्तत्वात् (?) । ततः संध्यावन्दनपूर्वकमस्तमित आदित्ये स्वस्वा होमं कुर्यात् । तत्र बौधायनः—अथ सायं हुतेऽग्निहोत्र उत्तरेण गार्हप तृणानि सꣳस्तीर्य द्वंद्वं [न्यञ्चि]पात्राण्यासादयित्वा यष्ट्यादीनि कन् वासो दक्षिणेनाऽऽहवनीयं ब्रह्मायतने दर्भानास्तीर्य कृष्णाजिनमन्तध यैतां रात्रीं जागर्तीति ।

१ क. वासं क° । २ क. °मान्तरे ग्रा° । ३ ख. °तरथा च श्र° । ४ घ. ततः कु° ।

तथा दत्तात्रेयः–होमं दत्त्वा तथा सायं कुशान्कृष्णाजिनं ततः ।
ब्रह्मस्थाने समास्तीर्य ब्रह्मभावेन संस्थितः ॥
ब्रह्मरात्रीं ततो दत्त्वा विष्णौ संन्यस्य मानसम् ।
समभ्यर्च्य हृषीकेशं जपन्नेकाक्षरं परम् ॥ इति ।

[बौधायनः]–य एवं विद्वान्ब्रह्मरात्रीमुपोष्य ब्राह्मणोऽग्नीन्समारोप्य वा प्रमीयते सर्वं पाप्मानं तरति तरति ब्रह्महत्यामिति । ततो ब्राह्मे मुहूर्ते कृत्यमाह शौनकः—'ब्राह्मे मुहूर्त उत्थाय यथाविधि स्नात्वा प्रातरग्निकार्यं कृत्वा व्याहृतीर्जपित्वा तरत्समन्दी धावतीति सूक्तमप्सु जपेत् । इति । तत आहिताग्निश्चेत्प्राजापत्येष्टिं कुर्यादेकाग्निश्चेदाग्नेयीम् । तथा च जाबालश्रुतिः—" तद्धैके प्राजापत्यामेवेष्टिं कुर्वन्ति तदु तथा न कुर्यात् । आग्नेयीमेव कुर्यात्" इति [ ख० ४ ]। अत्र प्राजापत्येष्टिराहिताग्नेः। तद्वाक्यशेषेऽग्नीनिति बहुवचनश्रवणात् । आग्नेयी त्वेकाग्नेः। तद्वाक्यशेषेऽग्निमाजिघ्रेदित्येकवचनश्रवणात् ।

मनुः—प्राजापत्यां निरुप्येष्टिं सर्ववेदसदक्षिणाम् ।
आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात् ॥

दत्तात्रेयः–ब्रह्मरात्रीं ततो दद्यात्पौर्णमास्यां द्विजोत्तमः ।
प्रातर्हुत्वा स्वकल्पेन कृत्वा स्नानादिकां क्रियाम् ॥
प्राजापत्यां प्रतिपदि कृत्वेष्टिं तु यथाविधि ।
ततो विप्राय दद्यात्तु सर्ववेदसदक्षिणाम् ॥

अथवाऽऽहिताग्निर्वैश्वानरीयेष्टिं कुर्यात् । तथा च श्रुतिः—" आग्नेयीमेव कुर्यात् " । " अग्नये वैश्वानराय द्वादशकपालं पुरोडाशं निर्वपति । प्राजापत्यं चरुं वैष्णवं नवकपालं च " इति । अत्र विशेषो बौधायनेनोक्तः–देवयजनोल्लेखनप्रभृत्यग्निमुखान्तं कृत्वा पङ्क्त्या जुहोति वैश्वानराय प्रतिवेदयाम इति पुरोनुवाक्यामनूच्य वैश्वानरः पवमानः पवित्रेणेति । अथाऽऽज्याहुतीर्जुहोति " वैश्वानरो न उतय " इत्यष्टाभिरनुष्टुप्छन्दसामग्नये स्वाहेति च। अथैनमुपतिष्ठते " सहस्रशीर्षा पुरुष" इत्यनेनानुवाकेन । स्विष्टकृत्प्रभृतिसिद्धमाधेनुवरप्रदानात् । अथाग्नेर्दर्भस्तम्भे(म्बे)षु हुतशेषं निदधाति । " सर्वो वै रुद्रो " " विश्वं

१ ग. रात्री त° । २ क. जुहुयादे° । ३ ग. °जनविष्णवे वप्र° । ४ क. °त्वा द्वा यद्भ्यो जु° ।
५ ग. °धाम्नीध्रो दर्भ° । घ. °थाग्रेणाग्निं दर्भ° ।

भूतम् ।" इति द्वाभ्यां मन्त्राभ्यामुत्सृजत्यग्निम् । "आयुर्दा अग्ने हविषो जुषाण" इत्युपादाय[1] प्रक्षाल्य प्राश्नाति सहस्रशीर्षेत्यनुवाकेन प्राश्याऽऽचम्याऽऽत्मानं प्रत्यभिमृशत्योमिति । ब्रह्मेत्येतेनानुवाकेनाथाग्निद्रव्यमग्नौ[2] प्रक्षिप्याऽऽत्मन्यग्नीन्समारोपयेत्, या ते अग्ने यज्ञिया तनूरिति । तत्रैव विशेषमाह शौनकः-प्राजापत्ययेष्ट्वा पुनराहवनीयमुद्धृत्य प्राणापानौ समौ कृत्वा सर्वं निदधाति । यच्च पूर्तं यच्च प्रजापतौ तन्मनसि जुहोमि विमुक्तोऽहं देवकिल्बिषात्स्वाहा । अयं ते योनिर्ऋत्विय इत्यात्मन्यग्नीन्समारोपयति । प्राणेन गार्हपत्यम् । अपानेन दक्षिणाग्निम् । व्यानेनाऽऽहवनीयम् । उदानेनाऽऽवसथ्यम् । समानेन सभ्यम् । पुनराहवनीयं गत्वाऽद्भ्यः संभूत इत्यादित्यमुपस्थायोत्तरनारायणेन गृहान्निष्क्र(ष्क्रा)मेदिति । पात्रविशेषाणां प्रतिपत्तिमाह दत्तात्रेयः-मृन्मयान्यश्ममयानि चाप्सु जुहुयात् । गुरवे तैजसादीनि[3] दद्यादिति । यमः-

ततश्चाऽऽहवनीयाख्ये हुत्वा पात्राणि मन्त्रतः ।
असौ स्वर्गाय लोकाय स्वाहेत्येवं निधापयेत् ॥
अयं ते योनिरित्येवं समारोप्याऽऽत्मनो मुखे ।
ततो वैश्वानरं ध्यायेत्स्वर्गाख्यं विश्वतोमुखम् ॥
अथ गार्हपत्ये अग्नौ जुहुयादरणीं बुधः ।
अयमग्निर्गृहपतिर्मन्त्रेणानेन भावितः ॥
अयं ते योनिरित्येवं समारोप्याऽऽत्मनो हृदि ।
ततो वैश्वानरं ध्यायेद्भूःसंज्ञं विश्वतोमुखम् ॥
जुहुयाद्दक्षिणाग्नौ च मुसलोलूखले[4] ततः ।
अयमग्निः पुरीष्येति मन्त्रेणानेन यत्नतः ॥
अयं ते योनिरित्येवं मनस्यारोप्य वेदवित् ।
ध्यायेद्वैश्वानरं देवमन्तरिक्षाख्यमव्ययम् ॥
गत्वाऽथ गार्हपत्यं तु सूक्तं वै पौरुषं जपेत् ।
वेद्यां मध्ये ततः स्थित्वा कोऽसीति[5] तु जपेद्द्विजः ॥ इति ।

एकाग्न्यनग्नी तु शौनकोक्तेन विधिना चरुं श्रपयित्वा होमादि कुर्याताम् । स उच्यते—ब्राह्मे मुहूर्त उत्थाय यथाविधि स्नात्वा प्रातरग्नि-

---

१ ग. घ. इति । अथ पक्वादुपा° । ग. इति । अपक्वादुपा° । २ ग. °ह्मेत्सन्तेना° । ३ ख. ग. घ. °सानि । ४ ख. °मुशलो° । ५ क. ख. °कोऽस्येति° ।

कार्यं कृत्वा व्याहृतीर्जपित्वा तरत्समन्दी धावतीति सूक्तमप्सु जपित्वा स्वगृह्योक्तेन विधिना चरुं श्रपयित्वाऽग्निमुपसमाधाय प्राणाय स्वाहा । अपानाय स्वाहा । व्यानाय स्वाहा । उदानाय स्वाहा । समानाय स्वाहेत्याज्यहोमं कृत्वा, अथ पुरुषसूक्तेन प्रत्यृचमाज्यहोमं[1] [2]चरुहोमं च कृत्वा पुरुषसूक्तं जपित्वा प्रणीतापात्रं संमृज्य सौविष्टान्तं हुत्वाऽऽचार्यायाऽऽज्यपात्रं चरुपात्रं हिरण्यं धेनुं च दत्त्वाऽऽचार्यपुरतोऽवस्थितः "सं मा सिञ्चन्तु मरुतः समिन्द्रः सं बृहस्पतिः । सं माऽयमग्निः सिञ्चत्वायुषा च बलेन चाऽऽयुष्मन्तं करोतु माम्" इति जपित्वा "या ते अग्ने यज्ञिया तनूस्तयेह्यारोहाऽऽत्माऽऽत्मानम् । अच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि । यज्ञो भूत्वा यज्ञमासीद स्वां योनिं जातवेदो भुव आजायमानः सक्षय एहि" इति त्रिरात्मन्यग्नीन्समारोप्येति । अनग्नेस्तु समारोप एव नास्ति । तत्र च बह्वृचपरिशिष्टम्—अथाऽऽत्मन्यग्नीन्समारोपयेदेकाग्निरेकाग्निमनग्निर्न कंचनेति । अनग्निना कपिलप्रोक्तेन विधिना संन्यासः कर्तव्यः । तमपि संक्षेपतो दर्शयिष्यामः—नान्दीमुखब्राह्मणभोजनपुण्याहं[3]वाचनकेशश्मश्रुलोमनखवपनस्नानसर्वदानदण्डादिसंनिधानत्रिवृत्प्राशनसावित्रीप्रवेशनसंध्याराधनानि कृत्वोपोष्य स्नात्वा ध्याराधनं कृत्वा देवर्षिपितृतर्पणं च कृत्वाऽद्भ्यः स्वाहा पुत्रैषणाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थितोऽहं स्वाहेत्यप्स्वेवापः ाणिना हुत्वा यथाविधि प्रैषमुक्त्वाऽभयं सर्वभूतेभ्यो मत्तः[4] सर्वं प्रवर्तते स्वाहेत्यभयदक्षिणां दत्त्वा यथाधिकारं यथाविधिं[5] दण्डादि गृहीत्वा स्वधर्मनिष्ठो भवेदिति । साग्निकस्तूक्तेन[6] विधिनाऽग्निसमारोपं विधाय जलाशयं गच्छेत् । ततः पुत्रं दृष्ट्वा त्वं ब्रह्मेत्यादिवाक्यत्रयं पेत् । तथा च शौनकः—पुत्रं दृष्ट्वा जपति त्वं ब्रह्म त्वं यज्ञस्त्वं लोक ति । स पुत्रं[7] प्रत्याहाहं ब्रह्माऽहं यज्ञोऽहं लोक इति । तथा च बह्वृचरिशिष्टे—अथ पुत्रान्सुहृदो बन्धून्प्रत्याह न मे कश्चिन्नाहं कस्य चिदिति । तत आश्रमात्संन्यासाश्रमं गच्छामीति संकल्पयेत् । ततोऽप्स्वेवोदकाहुतिद्वयमाह कपिलः—अद्भ्यः स्वाहा पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थितोऽहं स्वाहेत्यप्स्वेवापः पाणिना हुत्वेति । ततो यज्ञोपवीतं[8] हस्ते[9] गृहीत्वाऽऽर्द्रीकृत्य वेदान्तविज्ञानेति मन्त्रेणाप्सु

१ ग. °मं कृ° । २ क. ख. च कृ° । ३ ख. हश्मश्रु° । ४ क. °त्तः स्वाहे° । ५ क. °धि नमस्कारं यथाविधि द° । ६ ग. घ. न प्रकारेणाग्नि° । ७ ग. पुत्रः प्रत्याहेदं ब्र° । ८ क. °तं द्विहस्ते गृ° । ९ ख. °स्तेन गृ° । घ. °स्ते कृत्वाऽऽ° ।

जुहुयात्। तथा च बौधायनः-अथ यज्ञोपवीतं विसृज्याद्भिः संस्पृश्याप्सु जुहोति वेदान्तेति । आरुण्युपनिषदि च-"उपवीतं भूमौ वाऽप्सु वा विसृजेत् । " इति । ततः शिखार्थं रक्षितान्केशानुत्पाट्य भूः स्वाहेति भूमावप्सु वा निक्षिपेत् । तथा च कठश्रुतिः—" सशिखान्केशान्निष्कृत्य विसृज्य यज्ञोपवीतं भूः स्वाहा" इति [ख० १]। तथाऽऽथर्वणश्रुतिरपि-

" सशिखं वपनं कृत्वा बहिः सूत्रं त्यजेद्बुधः " [ख० २]।

ततः प्रैषोक्तिप्रकारमाहाऽऽरुणी श्रुतिः "ब्रह्मसूत्रमहमेवेति विद्वांस्त्रिवृत्सूत्रं त्यजेद्विद्वान्य एवं वेद। संन्यस्तं मया संन्यस्तं मया संन्यस्तं मयेति त्रिरुक्त्वाऽभयं सर्वभूतेभ्यो मत्तः सर्वं प्रवर्तते । सखा मा गोपायौजः सखा योऽसीन्द्रस्य वज्रोऽसीत्यनेन मन्त्रेण कृत्वोर्ध्वं वैणवं दण्डं कौपीनं परिग्रहेत् " इति (ख० ३)। बह्वृचपरिशिष्टकारः-प्राङ्मुखस्तिष्ठन्नूर्ध्वबाहुर्ब्रूयात् । ॐ भूः संन्यस्तं मया । ॐ भुवः संन्यस्तं मया । ॐ स्वः संन्यस्तं मया। ॐभूर्भुवः स्वः संन्यस्तं मयेति त्रिरुपांशु त्रिर्मध्यमं त्रिरुच्चैरिति । प्रकारान्तरमाह शौनकः—ॐ भूर्भुवः स्वः संन्यस्तं मया संन्यस्तं मया संन्यस्तं मयेति मन्दमध्यमोत्तमस्वरेणोक्त्वा, अभयं सर्वभूतेभ्यो मत्त इति प्राङ्मुख उदङ्मुखः पूर्णाञ्जलिनिनयनं कृत्वा यथाधिकारं यथाविधि दण्डादि गृहीत्वा स्वधर्मनिष्ठो भवेदिति । बौधायनस्त्वन्यथाऽऽह—"ॐ भूर्भुवः स्वः संन्यस्तं मया संन्यस्तं मया संन्यस्तं मयेति त्रिरुपांशूक्त्वा मध्यमं त्रिरुच्चैस्त्रिः सत्या हि देवा इति ह विज्ञायते। अभयं सर्वभूतेभ्यो मत्त इत्यपां पूर्णमञ्जलिं निनयति " इति ।

ततो विष्णुप्रार्थनाप्रकारमाह यमः—

दत्त्वा तोयाञ्जलिं विप्रो भक्त्या संप्रार्थयेद्धरिम् ।
सर्वदेवात्मके तोये तोयाहुतिमहं हरे ॥
दत्त्वा सर्वैषणां त्यक्त्वा युष्मच्छरणमागतः ।
त्राहि मां सर्वलोकेश गतिरन्या न विद्यते ॥
संन्यस्तं मे जगन्नाथ पाहि मां मधुसूदन ।
त्राहि मां सर्वदेवेश वासुदेव सनातन ॥
संन्यस्तं मे जगद्योने पुण्डरीकाक्ष मोक्षद ।
अहं सर्वाभयं दत्त्वा भूतानां परमेश्वर ॥

---

१ ग. संमृज्याप्सु । २ ख. घ. °निष्कृत्य । ३ क. °हि । ४ ग. घ. °र्वलोकेश । वा° । ५ क. °श्वरः । सु° ।

युष्मच्छरणमापन्नस्त्राहि मां पुरुषोत्तम ॥ इति ।

ततो दिगम्बरो भूत्वा किंचिदुदङ्मुखो गच्छेत् । ततो विविदिषुश्चेद्गु- र्वनुज्ञया परावृत्य गुरुसमीपे तिष्ठेत् । तथा च संप्रदायविदः—

ततो दिगम्बरो भूत्वा गच्छेत्किंचिदुदङ्मुखः ।
जिज्ञासुश्चेत्परावृत्य तिष्ठेत्तदनुशासनात् ॥ इति ।

ततो दोरकं कौपीनं बहिर्वासः कन्थां दण्डं च क्रमेणैकैकं प्रणवेनै- वाऽऽदद्यादिति । तथा च बह्वृचपरिशिष्टे—" अन्यत्सर्वं प्रणवेन " इति । ततः " इन्द्रस्य वज्रोऽसि वार्त्रघ्नः सर्वं मे यच्छ ( शर्म मे भव ) यत्पापं तन्निवारय "

* विष्णुहस्ते यथा चक्रं शूलं शिवकरे तथा ।
इन्द्रहस्ते यथा वज्रं तथा दण्डं(ण्ड) भवाद्य मे ॥

इन्द्रस्य वज्रोऽसीति मन्त्रेण दण्डग्रहणं कुर्यात् । इत्यनेन मन्त्रेण ण्डं संप्रार्थयेत् । मन्त्रलिङ्गाच्च प्रार्थनायां विनियोगः । ततः " सखा ा गोपाय " इति दक्षिणहस्ते दण्डं धारयेत् । अत्र बौधायनः—अथ ण्डमादत्ते सखा मा गोपायेति । मैत्रायणी श्रुतिरपि " इन्द्रस्य वज्रोऽ- ोति त्रीन्वैणवान्दण्डान्दक्षिणे पाणौ धारयेदेकं[2] वा । यद्येकं तदा शिखं वपनं कृत्वा विसृज्य यज्ञोपवीतं चतुर्षु वर्णेष्वेकागारे भैक्षमश्नी- न्माधुकरीं च" इति । काममेकं वैणवं दण्डं धारयेदित्यारुणी श्रुतिः ।

दण्डलक्षणमाहात्रिः—

धारयेद्वैणवं दण्डं न स्थूलं न कृशं तथा ।
तस्य चाग्रे च मूले च ग्रन्थिं त्यक्त्वा तु धारयेत् ॥
द्विचत्वारि षडष्टौ वा ह्यङ्गुलानि समाहितः ।
न न्यूनं नातिरिक्तं च[3] द्विगुणं मूलतोऽग्रके ॥

भविष्यपुराणे—दण्डं तु वैणवं सौम्यं सत्वचं समपर्वकम् ।
पुण्यस्थाने समुत्पन्नं नानाकल्मापशोभितम् ॥
अदग्धमहतं कीटैः पर्वग्रन्थिविराजितम् ।
स्वयंभूतं तु मेदिन्यां शाखावर्जमृजुं शुभम् ॥
नासोदग्रं शिरस्तुल्यं भ्रुवोर्वा बिभृयाद्यतिः+ ।

---

* इत आरभ्य कुर्यादित्यन्तग्रन्थः क. ग. घ. पुस्तकेषु नास्ति । + घ. पुस्तके समासे— अथ वा ज्ञानदण्डं धारयेत् । ज्ञानाज्ञानद्वयोरन्तःपर्वं चाष्टशरीरकम् । अभिन्नममलं दण्डं सदा धारयते यतिः ।

---

१ घ. °वृत्तास्ति° । २ घ. °ष्वनेका° । ३ क. च ह्यङ्गुलं मू° । ४ ग. घ. रम्यं । ५ क. ख. ग. नासादग्रं ।

विष्णुः—एकदण्डी भवेद्वाऽपि त्रिदण्डी वाऽथवा भवेत् ।

काण्वायनः—एकदण्डधरा मुण्डा इति ।

जमदग्निः—दण्डात्मनोस्तु संयोगः सर्वदैव विधीयते ।
न दण्डेन विना गच्छेदिषुक्षेपत्रयं बुधः ॥
जलाम्बरादिषु क्षिप्ते न कश्चिद्दोषभाग्भवेत् ।
शिष्यादिभिर्विनीतेऽपि नीत एव स आत्मना ॥
हस्तपादादिवच्छिण्य इति शिष्टा ब्रुवन्ति हि ।

संन्यासो नाम त्यजन्सर्वमाश्रमादनाश्रमाद्वाऽऽश्रमं गच्छामीति संकल्प्य प्रैषोच्चारणाभयदानानीति । नान्दीमुखादिदण्डग्रहणान्तस्तु क्रियाकलापोऽस्यैवाङ्गभूतः । अतएवाऽऽतुरस्य संकल्पप्रैषोक्त्यभयदानमात्रात्फलं श्रूयते "यद्यातुरः स्याद्वाचा मनसा वा संन्यसेदेष पन्था ब्रह्मणा ह्यानुवित्तस्तेनेति संन्यासी ब्रह्मविदित्येवमेवैष भगवन्निति वैदेहः* " [ जाबा ख० ५ ] इत्यादिना ।

स्मर्यते च—
संन्यस्तमिति यो ब्रूयात्प्राणैः कण्ठगतैरपि ।
न तत्क्रतुसहस्रेण फलं प्राप्नोति मानवः ॥ इत्यादिना ।

सोऽपि जीविष्यतीति चेत् । यथाधिकारं यथाविधि दण्डादि गृहीत्वा स्वधर्मनिष्ठो भवेदिति । त्रिदण्ड्यपि स्वपरिग्रहं परित्यज्य परमहंसो भवेत् तथा च स्मृतिः—
त्रिदण्डं कुण्डिकां चैव सूत्रं चाथ कपालिकाम् ।
जन्तूनां वारणं वस्त्रं सर्वं भिक्षुः परित्यजेत् ॥

बौधायनः—तस्य त्यागविधिः । अरण्यं गत्वा शिखामुण्डः काषाय वासा वाङ्मनःकर्मदण्डैर्भूतानामद्रोही यज्ञोपवीतं वेदं त्रिदण्डं कमण्डलुं पात्रं परित्यज्य विसृज्य सर्वकर्माणि सर्वसहः सर्वसङ्गनिवृत्तः प्रसन्नमनाः सुखासीनो विश्वरूपमात्मानं चिन्तयेदिति । अथ त्याज्यनिरूपणं बृहदारण्यके—" एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय " इति [ ३।५।१ ] । आरण्युपनिषदि—"आरुणिः प्रजापतेर्लोकं जगाम । तं गत्वोवाच । केन भगवन्कर्माण्यशेषतो विसृजामीति । तं होवाच । प्रजापतिस्तव पुत्रान्भ्रा-

* जाबालोपनिषदि तु वैदेह इत्यत्र याज्ञवल्क्य इति वर्तते ।

१ ख. ग. घ. °ऽन्तरा° । २ ग. °द्वाऽऽत्मानं ग° । ३ ख. कुटिकां ।

तृन्बन्ध्वादीञ्शिखां यज्ञोपवीतं यागं सूत्रं स्वाध्यायं च भूर्लोकभुवर्लोक-स्वर्लोकमहर्लोकजनलोकतपोलोकसत्यलोकं च । अतलपातालवितल-सुतलरसातलतलातलमहातलब्रह्माण्डं विसर्जयेद्दण्डमाच्छादनं कौपीनं परिग्रहेच्छेषं विसृजेत् " इति [ख० १] । काठके—"यज्ञोपवीतं वेदांश्च सर्वं तद्विसर्जयेद्यतिः " इति [ख०४] । परमहंसोपनिषदि—"असौ स्वपु-त्रमित्रकलत्रबन्ध्वादीञ्शिखां *यज्ञोपवीतं यागं सूत्रं च स्वाध्यायं च सर्वकर्माणि संन्यस्यायं ब्रह्माण्डं हित्वा कौपीनं दण्डमाच्छादनं च स्वश-रीरोपभोगार्थाय च लोकस्योपकारार्थाय च परिग्रहेत्" इति (ख०१) ।

व्यासश्च—त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज ॥
याः काश्चिज्जीवता शक्यास्त्यक्तुं नित्यक्षताः क्रियाः ॥
ताः सर्वाः संपरित्यज्य निमेषादिव्यवस्थितः ।

अत्रिः—शेषं वित्तं त्यजेद्विप्रो धनधान्यादिकं च यत् ।
अत्यागात्सर्ववित्तानां संन्यासो निष्फलो भवेत् । इति ॥

बाष्कलः—कुटुम्बं पुत्रदारांश्च वेदाङ्गानि च सर्वशः ॥
यज्ञं यज्ञोपवीतं च त्यक्त्वा गूढश्चरेन्मुनिः ॥

सुमन्तुः—एष त्यज्याम्यहं सर्वं कामभोगादिकं सुखम् ।
शोकं तोषं विषादं च गन्धमाल्यानुलेपनम् ॥
भूषणं नर्तनं गेयं दानमादानमेव च । इत्यादि ।

अथ श्रुतिस्मृतिभ्यामवगम्यमानं संन्यासफलं प्रदर्श्यते । बृहदारण्यके—एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति " [४ । ४ । २२] प्रकृत-ात्मानमेव लोकमिच्छन्तः प्रव्रजेयुरित्यर्थः । छान्दोग्ये—" ब्रह्मसं-स्थोऽमृत्वमेति" इति [२ । २३ । २] ।

त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् ।
त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ॥

इति भाल्लवीयश्रुतिः । "न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमा-नुः " इति तैत्तिरीयके [१०।५] । अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः चरेदद्रोही भैक्षाणो ब्रह्मभूयाय कल्पते" इति जाबालश्रुतिः [ख०५] ।

---

* उपनिषत्समुच्चयान्तर्गतपरमहंसोपनिषदि—शिखायज्ञोपवीते स्वाध्यायं चेति वर्तते ।

१ ग. न्यासश्च । २ घ. नित्याक्षताः । ३ ग. घ. °विवादं° ।

शतं कुलानां पुरतो बभूव तथाऽप(व)राणां त्रिशतं समग्रम् ।
एते भवन्ति सुकृतस्य लोके येषां कुले संन्यसतीह विप्रः ॥
संन्यासाद्ब्रह्मणः स्थानं वैराग्यात्प्रकृतौ लयः ।
ज्ञानात्कैवल्यमाप्नोति तिस्रस्ता गतयः स्मृताः ॥
याज्ञवल्क्यः—अकार्यकारिणां दानं वेगो नद्याश्च शुद्धिकृत् ।
शोध्यस्य मृच्च तोयं च संन्यासोऽथ द्विजन्मनाम् ॥
विष्णुः—एकरात्रोषितस्यापि यतेर्या गतिरुच्यते ।
न सा शक्या गृहस्थेन प्राप्तुं क्रतुशतैरपि ॥
संन्यस्तमिति यो ब्रूयात्प्राणैः कण्ठगतैरपि ।
न तत्क्रतुशतेनापि प्राप्तुं शक्नोति मानवः ॥
संन्यस्तं[1] तु द्विजं दृष्ट्वा स्थानाच्चलति भास्करः ।
एष मे मण्डलं भित्त्वा परं ब्रह्माधिगच्छति ॥
दक्षः—त्रिंशत्परांस्त्रिंशदवरांस्त्रिंशच्च परतः परान् ।
सद्यः संन्यसनादेव नरकात्तारयेत्पितॄन् ॥
जाबालः—चतुर्वेदस्तु यो विप्रः सोमयाजी शतक्रतुः ।
तस्मादपि यतिः श्रेष्ठ[2]स्तिलपर्वतमन्तरम् ॥
कपिलः—संन्यस्तमिति यो ब्रूयात्प्राणैः कण्ठगतैरपि ।
सोऽक्षयाँल्लभते लोकान्पुनर्जन्म न विद्यते ॥
अङ्गिराः—षष्टिं कुलान्यतीतानि षष्टिमागामिकानि च ।
कुलान्युद्धरते प्राज्ञः संन्यस्तमिति यो वदेत् ॥
ये च संतानजा दोषा येऽपि स्युः कर्मसंभवाः ।
संन्यासस्तान्दहेद्दोषांस्तुषाग्निरिव काञ्चनम् ॥
सूर्यखद्योतयोर्यद्वन्मेरुसर्षपयोरिव ॥
अन्तरं हि महद्दृष्टं तथा भिक्षुगृहस्थयोः ।
मनुः—यो दत्त्वा सर्वभूतेभ्यः प्रव्रजत्यभयं गृहात् ॥
तस्य तेजोमया लोका भवन्ति ब्रह्मवेदिनः ।
यस्मादण्वपि भूतानां द्विजान्नोत्पद्यते भयम् ॥
तस्य देहाद्विमुक्तस्य भयं नास्ति कुतश्चन ।

ब्रह्मवेदिनः सगुणब्रह्मविद इत्यर्थः । तेजोमयलोकसंबन्धात् । क
त्वादेरबाधितत्वाद्भयाशङ्काभावाच्च । न हि परब्रह्मविदस्तेजोमयलोक

---

१ क. ख. घ. °न्यसन्तं द्वि° । २ ग. घ. श्रेष्ठो मेरुसर्षपयोरिव । क° ।

संबन्धो भयाशङ्का वा स्यात् । ब्रह्मैव सन्ब्रह्माप्येति न बिभेति कुतश्च-
नेत्यादिश्रुतेः ।

गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः ।
य इच्छेन्मोक्षमास्थातुमुत्तमां वृत्तिमाश्रयेत् ॥

यमः—ज्ञानेन मुच्यते भिक्षुस्तपसा स्वर्गमाप्नुयात् ।
नरकं विषयासङ्गात्त्रयो मार्गास्तपस्विनाम् ॥

व्यासः—कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ॥
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ।
यस्य संन्यसनादेव स्थानाच्चलति भास्करः ॥
कुलकोटिशतैः सार्धं प्राप्नोति परमं पदम् ।
षष्टिं कुलान्यतीतानि षष्टिमागामिकानि च ॥
नरकादुद्धरत्येव संन्यस्तोऽहमिति ब्रुवन् ।
दिव्यतेजोमयः श्रीमान्सूर्यचन्द्राग्निमण्डलम् ॥
भित्त्वा प्रयाति संन्यासी स्वधर्मपरिपालनात् ।

क्तेन विधिना संन्यासं विधायाऽऽत्मज्ञानाय गुरुसमीपं गच्छेत् । थाऽऽथर्वणोपनिषदि मुण्डके—"परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो मायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समि- श्रोत्रियं ब्रह्मनिष्ठम्" इति [ १।२।१२ ]। ततो विनयादिगुण- हमुपगम्य दक्षिणं जानुं भूमिं नीत्वा पादग्रहणं कृत्वा "यो विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबु- ं मुमुक्षुर्वै शरणमहं प्रपद्ये" ( श्वेता० ६ । १८ । ) इति मन्त्रेण द्बुद्ध्योपस्थाय, अधीहि भगवो ब्रह्मेति ब्रूयात् । तथा शेषम्—अथ गुरुमुपगम्य दक्षिणं जान्वाच्य पादावुपसंगृ- अधीहि भगवो ब्रह्मेतीति । तस्मै साधनचतुष्टयसंपन्नायाधिका- ब्रह्मोपदिशेत् । तथा च मुण्डके—"तस्मै स विद्वानुपस- य प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं नां तत्त्वतो ब्रह्मविद्यां तदेतत्सत्यम्" इति [ १ । २ । सो गुरुरद्वैतः सच्चिदानन्दैकरूपमात्मानमनुसंधाय जलपूर्णशङ्ख- भ्यर्च्य द्वादशप्रणवैरभिमन्त्र्य तेनोदकेन प्रणवेन शिष्यस्य श्चेत् । ततः शंनो मित्र इति शान्तिं पठित्वा शिष्यस्य स्तं दत्त्वा पुरुषसूक्तं जपेत् । तथा च बह्वृचपरिशिष्टे—अथास्य

शिरसि पुरुषसूक्तेन पाणिमुपदधाति मम व्रते ते हृदयं दधामि । मम चित्तमनुचित्तं ते अस्तु । मम वाचमेकव्रतो जुषस्व । बृहस्पतिस्त्वा नियुनक्तु मह्यमिति । हृदयदेश इति दीक्षायां प्रमाणं भिक्षुर्भिक्षुधर्ममुपसंगृह्य भिक्षुगुणसंपन्नमाचार्यमुपसंगम्य तत्संनिधौ दीक्षां परिगृह्णीयेति गालववचनम् । तत उदङ्मुखाय नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाद्वयब्रह्मप्रतिपादकं प्रणवं दक्षिणे कर्णे प्राङ्मुखः सन्नुपदिशेत् । प्रणवस्य चार्थमाचार्यवचनेन बोधयेत् । आचार्यवचनं च ॐ पञ्चीकृतपञ्चमहाभूतानीत्यादि । ततः, अयमात्मा ब्रह्म [ बृह० २।५।१९ ] तत्त्वमसि [ छान्दो०६।८।७ ] प्रज्ञानं ब्रह्म [ ऐत० ५।३ ] इत्यादीनि शिष्यशाखावाक्योपदेशपूर्वकमुपदिशेत् । तेषामर्थं च बोधयेत् । ततो नाम दद्यात् । तथा च बह्वृचपरिशिष्टे—अथास्मै नाम दद्याद्वैष्णवं मासनामाथ वा चत इति ।

तथा च संप्रदायविदः—तत्त्वंपदार्थयोरैक्यं यत्पदं प्रतिपादयेत्
तन्नाम यतये कुर्याद्वाक्यनाम तदिष्यते ॥ इति ।

पूर्वाचार्याणामपि नाम न कर्तव्यम् । तथा च—

यतीनां ख्यातयशसामाचार्यः पूर्वभाविनाम् ।
नाम कुर्यान्न शिष्यस्य बुद्धिपूर्वं कदाचन ॥ इति ।

ततो गुरुः शिष्यायौपनिषदान्परमहंसधर्मानुपदिशेत् । ननु सानां त्यक्तसर्वकर्मणां कथं धर्मेष्वधिकारः । उच्यते । यज्ञादिस परित्यागेऽपि विविदिषूणां स्वाश्रमोचितब्रह्मचर्यापरिग्रहश्रवणप्रण ससंध्याध्यानमौनत्रिषवणस्नानगुरुशुश्रूषादीनि कर्माणि श्रुतिस्मृ व्यतया प्रतीयन्ते । तत्राऽऽरुणी श्रुतिः—" ब्रह्मचर्यमहिंसां चाप सत्यं च यत्नेन हे रक्षतो हे रक्षतो हे रक्षत इति " [ख०३] "त्रि स्नानमाचरेत्संधिं समाधावात्मन्याचरेत्सर्वेषु वेदेष्वारण्यकमावर्त पदमावर्तयेदुपनिषदमावर्तयेत् " इति [ख० २] "औषधवदशन पधवदशनमाचरेत् " इति [ख० ३] । काठकब्राह्मणम्—"स्व जीवेभ्यः ' [ कठश्रु० ४] इत्युक्त्वा "दीक्षामुपेयात्काषायवास पस्थरोमा लघुमुण्डोदरपात्रोदपात्रोदकस्मादित्यध्यात्ममस्य ऊर्ध्वगो वायुर्विमुक्तमार्गो भवेदनिकेतश्चरेदभिक्षाशी न दद्यात् । क
—गोमयलोक

१ ख. व्रतं ते हृदयं ते द° । २ ग. घ. °त्रोकस्मा° । ३ घ. °शी नं न दद्या... वंकैर्धार° ।

ारयेत् " इति । बृहदारण्यके—" तस्मादेवंविच्छान्तो दान्त उपरत-
ातिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्यति सर्वमात्मानं
यति " [४।४।२३।] "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो
देध्यासितव्यः " [बृ० २।४।५।] "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य
येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च
द्याथ ब्राह्मणः " [ बृ० ३।५।१ ] । अयमर्थः—यस्मात्पूर्वे ब्राह्मणा
ात्मानमसाधनफलस्वभावं विदित्वा सर्वस्मात्साधनफलस्वरूपादे-
लक्षणाद्व्युत्थाय भिक्षाचर्यं चरन्ति स्म दृष्टादृष्टार्थं कर्म तत्साधनं
इत्वा तस्मादद्यापि ब्रह्मविद्ब्राह्मणः पाण्डित्यं पण्डितभावमेतदा-
ानं पाण्डित्यं निर्विद्य निःशेषं कृत्वा, आत्मज्ञानं निरवशेषं कृत्वे-
आचार्यत आगमतश्च वेदान्तानां तात्पर्यावधारणश्रवणमे-
व्युत्थाय कुर्यादित्यर्थः । एषणामतिरस्कृत्य न ह्यात्मविषयस्य
स्योद्भव इति । तस्मादेषणाभ्यो व्युत्थाय ज्ञानबलभावेन बाल्येन
थातुमिच्छेत् । साधनफलाश्रयणं हि बलमितरेषामनात्मविदाम् ।
त्वा विद्वानसाधनफलस्वरूपात्मविज्ञानमेव केवलमाश्रयेत् ।
न हि करणान्येषणाविषय एनं हृत्वा स्थापयितुं नोत्सहन्ते ।
हीनं हि मूढं दृष्ट्वा दृष्टविषयाणामेषणायामेवैनं करणानि
त बलं नामाऽऽत्मविद्ययाऽशेषविषयदृष्टितिरस्करणम् । अतस्त-
बाल्येन तिष्ठासेत् । तथा " आत्मना विन्दते वीर्यम् " इति
त् । " नायमात्मा बलहीनेन लभ्यः " इति च । बाल्यं च
च निर्विद्य निःशेषं कृत्वाऽथ मननान्मुनिर्योगी भवति ।
ब्राह्मणेन कर्तव्यं यदुत सर्वानात्मप्रत्ययतिरस्कारः । एतत्कृत्वा
योगी भवति । अमौनं चाऽऽत्मानात्मप्रत्ययतिरस्कारौ पाण्डि-
कौ निःशेषं कृत्वा । मौनं नामानात्मप्रत्ययतिरस्करणस्य
फलम् । तच्च निर्विद्याथ ब्राह्मणः कृतकृत्यो भवतीति ।
तिः–जन्मना जायते शूद्रः संस्कारेण द्विजोत्तमः ।

वेदाभ्यासी भवेद्विप्रो ब्रह्म जानाति ब्राह्मणः ॥

ानिषदि—" तमेवैकं जानथ आत्मानमन्या वाचो विमु-
सेतुः " इति [ माण्डू० २ । २ । ५ ] । काठक-
वा एवं क्रमेण संन्यस्यति यो वा व्युत्तिष्ठति किं तस्य

---

ाः । स ब्राह्मण इति । अ° । २ घ. °स्मादद्यतवेऽपि° । ३ ख. हित्वा ।

यज्ञोपवीतं का वाऽस्य शिखा कथं तस्योपस्पर्शनम्" इति [कठश्रु० १]।
होवाच। इदमेवास्य तद्यज्ञोपवीतं यदात्मध्यानं विद्या शिखा न
सर्वत्रावस्थितैः कार्यं निर्वर्तयेन्नोदपात्रे जलतीरे निकेतन इति। अ
स्तम्बः—सर्वतः परिमोक्षमेके। सत्यानृते सुखदुःखे वेदानिमं च लोकं
त्यज्याऽऽत्मानमन्विच्छेत्। बुद्धे क्षेमप्रापणमिति। भिक्षाशी सर्ववर्ण
भिशस्तपतितवर्जमयज्ञोपवीती शौचनिष्ठः क्षमी तुल्यनिन्दास्तुतिः
भूतेषु मौनी गूढधर्माश्रितो नित्यं ध्यानयोगपरः स्थिरधीरात्म
रात्मतृप्त आत्मज्ञ आत्मनिष्ठ आत्मप्रतिष्ठ आत्मना ब्रह्म नयत्य
ब्रह्मवित्प्राप्नोतीति विज्ञायते। एवं ब्रह्मनिष्ठः परिव्राड्ब्रह्माप्येति।
याज्ञवल्क्यः—सत्यमस्तेयमक्रोधो ह्रीः शौचं धीर्धृतिर्दमः।
संयतेन्द्रियता विद्या धर्मः सर्व उदाहृतः॥

सत्यं यथार्थप्रियवचनम्। अस्तेयं परद्रव्यानपहारः। अक्रो
रिण्यपि क्रोधस्यानुत्पादनम्। ह्रीर्लज्जा। शौचमाहारादि
धीर्हिताहितविवेकः। धृतिरिष्टवियोगानिष्टप्राप्त्योः प्रचलि
यथापूर्वमवस्थानम्। दमः[3] कृच्छ्रादिभिर्मनसो दमनम्। संय
अप्रतिषिद्धेष्वपि विषयेष्वनतिप्रसङ्गः। विद्याऽऽत्मज्ञानम्। ए
दिभिरनुष्ठितैः सर्वधर्मोऽनुष्ठितो भवतीति।

अत्रिः—कौपिनाच्छादनं वासः कन्थां शीतनीवारिणीम्।
पादुके चापि गृह्णीयात्कुर्यान्नान्यस्य संग्रहम्॥
यदि वा कुरुते रागादधिकस्य परिग्रहम्।
नरकं रौरवं गत्वा तिर्यग्योनिषु जायते॥
कौपीनयुगलं कन्थां दण्ड एकपरिग्रहः।
यतेः परमहंसस्य नाधिकं तु विधीयते॥
विशीर्णान्यमलान्येव चैलानि ग्रथितानि तु।
कृत्वा कन्थां बहिर्वासो धारयेद्धातुरञ्जितम्[4]॥
काषायं ब्राह्मणस्योक्तं नान्यवर्णस्य कस्यचित्।
मोक्षाश्रमे सदा प्रोक्तं धातुरक्तं तु योगिनाम्।
देवलः—आददीत प्रवृत्तेभ्यः साधुभ्यो धर्मसाधनम्।
नाऽऽददीत निवृत्तेभ्यः प्रमादेनापि[5] किंचन॥

---

१ ख. °त्ममति°। २ ख. °त्यात्मा ब्रह्म ब्रह्म वि°। ग. घ. °त्यात्मा ब्रह्म
घ. दमो मदत्यागः। सं°। ४ घ. °रञ्जिताम्। ५ क. ग. प्रसादे°।

रथ्यायां बहुवस्त्राणि भिक्षा सर्वत्र लभ्यते।
भूमिशय्या सुविस्तीर्णा यतयः केन दुःखिताः॥
यतिधर्मसमुच्चये—क्षौमं शाणमयं वाऽपि वासः काङ्क्षेच्च कौशिकम्।
अजिनं चापि धर्मज्ञः साधुभ्यस्तानपीडयन्॥
उपानहौ ग्रहीतव्ये कार्पासमयमप्युत।
ऊर्णाकारोद्भवं वाऽपि यद्वाऽन्यत्स्यादयाचितम्॥
सचैलः स्यादचैलो वा कन्थाप्रावरणोऽपि वा।
एकवस्त्रेण वा विद्वान्व्रतं भिक्षुश्चरेद्यथा॥
नात्यर्थं सुखदुःखाभ्यां शरीरमुपतापयेत्।
स्तूयमानो न हृष्येत निन्दितो न शपेत्परम्॥
"*भिक्षाशी न दद्याद्यत्पूर्वैकं धारयेत्" इति ब्राह्मणम्। [क०श्रु०४](?)
वृद्धयाज्ञवल्क्यः-दधिदुग्धे गुरोर्वाक्ये तक्रे वै दन्तधावने।
हविर्ब्राह्मणकाम्येषु पुष्पमूलफलाशने॥
नियमातिक्रमो नास्ति ब्राह्मणानामनुज्ञया।
अध्यात्मपुस्तकं विप्रैर्दत्तं गृह्णीत भिक्षुकः॥
न तावद्द्रव्यमादाय लेखयेद्दोषदर्शनात्।
अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः॥
हविर्ब्राह्मणकाम्यं च गुरोर्वचनमौषधम्।
अत्रिः—स्नानं त्रिषवणं प्रोक्तं नियमाः स्युस्त्रिदण्डिनाम्।
न तत्परमहंसानां मुक्तानामात्मदर्शिनाम्॥
मौनं योगासनं योगस्तितिक्षैकान्तशीलता।
निस्पृहत्वं समत्वं च सप्तैतान्येकदण्डिनः॥
आनृशंस्यं क्षमा सत्यमहिंसा दम आर्जवम्।
प्रीतिः प्रसादो माधुर्यमक्रोधश्च यमा दश॥
विष्णुः—कौपीनाच्छादनार्थं तु वासोर्धस्य परिग्रहम्।
कुर्यात्परमहंसस्तु दण्डमेकं तथैव च॥
पितामहः—ग्रासादाच्छादनादन्यन्न गृह्णीयात्कथंचन।
यावदाहारयेत्तावत्प्रतिगृह्णीत नान्यथा॥

---

* इत आरभ्य ब्राह्मणमित्यन्तं न विद्यते ग. घ. पुस्तकयोः।

---

१ क. °ब्ययतिर्गृ° ।

मृद्भमापस्तथाऽन्नं च पत्रं पुष्पं फलानि च ।
असंवृत्तानि गृह्णीयात्प्रवृत्तानीहकार्यवान् ॥
दशव्रताद्यनुष्ठानाद्यतिः कल्याणमश्नुते ।
*तेषामेवाननुष्ठानान्नरकं स समश्नुते ॥
दश व्रतानि सर्वेषां यतीनां विहितानि च ।
+दानमिज्या तपो ध्यानं स्वाध्यायोपस्थनिग्रहः ॥
व्रतोपवासौ मौनं च स्नानं च नियमा दश ।
अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ॥
अक्रोधो गुरुशुश्रूषा शौचं दुर्भुक्तिवर्जितम् ।
वाङ्मनःकायचेष्टासु प्रमादस्य च वर्जनम् ॥
मनुः—यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः ।
आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान् ॥
वेदाभ्यासः प्रणवाभ्यासः ।
एक एव चरेन्नित्यं सिद्ध्यर्थमसहायकः ॥
सिद्धिमेकस्य संपश्यन्न जहाति न हीयते ।
नाभिनन्देत मरणं नाभिनन्देत जीवितम् ॥
कालमेव प्रतीक्षेत निदेशं भृतको यथा ।
कपालं वृक्षमूलानि कुचैलमसहायता ॥
समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम् ।
अत्रिः—[1]यतिः परमहंसस्तु तुर्याख्यः श्रुतिशासनात् ॥
शान्तो दान्तः सर्वसमः प्रणवाभ्यासतत्परः ।
श्रवणादिरतः शुद्धो निदिध्यासनतत्परः ॥
ब्रह्मभावेन संपूर्य ब्रह्माण्डमखिलं स्थितः ।
आत्मतृप्तश्चाऽऽत्मरतिः समलोष्टाश्मकाञ्चनः ॥
तत्त्वंपदैक्यबोधाच्च विष्णुरूपः स्वयं सदा ।
अरण्यनिष्ठस्य जितेन्द्रियस्य सर्वेन्द्रियप्रीतिनिवर्तकस्य ।
अध्यात्मचिन्तागतमानसस्य ध्रुवा ह्यनावृत्तिरुपेक्षकस्य ॥
निवसेत्परमो हंसो यत्र क्वापि कथंचन ।
निर्द्वन्द्वो नित्यसत्त्वस्थः सर्वत्र समदर्शनः ॥

---

* एतदर्धं न विद्यते क. पुस्तके । + एतद्वचनं नास्ति क. ग. घ. पुस्तकेषु ।

---

1 क. ख. ग. परः ।

तुरीयः परमो हंसः साक्षान्नारायणो यतिः ।
प्रपञ्चमखिलं यस्तु ज्ञानाग्नौ जुहुयाद्यतिः ॥
आत्मन्यग्नीन्समारोप्य सोऽग्निहोत्री न चेतरः ।

पाराशरः-तत्र परमहंसा नाम—एकदण्डधरा मुण्डा अममा अपरिग्रहा अयज्ञोपवीतिनो ज्ञानशिखा ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनो ब्रह्मनिष्ठा आत्मरता आत्मतृप्ता आत्मानं सर्वं पश्यन्त इति ।

ब्रह्मचर्यमहिंसा च सत्यमस्तेयमार्जवम् ।
वेदान्तश्रवणं ध्यानं भिक्षोः कर्माणि नित्यशः ॥
एकाकी निःस्पृहस्तिष्ठेन्न केनापि सहाऽऽलये ।
दद्यान्नारायणेत्येवं प्रतिवाक्यं सदा यतिः ।

बृहस्पतिः—आत्यन्तिकं ब्रह्मचर्यमाश्रमत्रयवासिनाम् ॥
स्वदारनियमात्सम्यग्ब्रह्मचारी गृहाश्रमी ।

मेधातिथिः-स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ॥
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ॥
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् ।

शङ्खः—इष्टानिष्टेषु भोगेषु व्यसनाभ्युदयेषु च ।
उपशान्तां वदेद्वाचमपि बाणैर्हतो भृशम् ॥
सत्यां वाचमहिंस्रां च वदेदनपवादिनीम् ।
अतिवादांस्तितिक्षेत आनृशंस्यमपैशुनम् ॥
न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ।
क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् ॥
*सप्तद्वारावकीर्णां च न वाचमनृतं वदेत् ।

जाबालः—भूतानां प्रियकारी स्यान्न परद्रोहकर्मधीः[१] ॥
नरा वशीकृता येन तेन देवा[२] वशीकृताः ॥

मेधातिथिः-भिक्षाटनं जपो[३] ध्यानं स्नानं शौचं सुरार्चनम् ।
कर्तव्यानि षडेतानि यतिना नृपदण्डवत् ॥

---

* एतदर्धं न विद्यते क. ग. घ. पुस्तकेषु ।

१ ग. घ. °हायता° । द° । २ क. °देशो वशीकृतः । मे° । ३ क. तपो ।

स्नानं शौचं तथा भिक्षा नित्यमेकान्तशीलता ।
भिक्षोश्चत्वारि कर्माणि पञ्चमं नोपपद्यते ॥
*स्नानं मनोमलत्यागः शौचमिन्द्रियनिग्रहः ।
ब्रह्मामृतं पिबेद्भैक्षमेकान्तं द्वैतवर्जनम् ॥

विष्णुः—आचार्येण समुद्दिष्टं लिङ्गं चैव समाश्रयेत् ।
शौचमाश्रमसंबन्धि न्यासधर्मांश्च शिक्षयेत् ॥

अत्रिः—अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।
भावशुद्धिर्हरौ भक्तिः संतोषः शौचमार्जवम् ॥
आहारशुद्धिर्वैराग्यमप्रमादो दया नृणाम् ।
अस्नेहो गुरुशुश्रुषा श्रद्धा क्षान्तिर्दमः शमः ॥
ह्रीस्तपो ज्ञानविज्ञानं योगो लब्धाशनं धृतिः ।
अदीनत्वमनुद्धर्षो ब्रह्मधीः समदर्शनम् ॥
भिक्षाटनं जपो ध्यानं त्यागः कर्मफलस्य च ।
एष स्वधर्मो विख्यातो यतीनां मुक्तिमिच्छताम् ॥
अभ्युत्थानं प्रियालापं गुरुवत्प्रीतिपूजनम् ।
यतीनां +व्रतवृद्धानां स्वीयधर्मानुवर्तिनाम् ॥
कर्तव्यमन्यथा योगी स्वधर्मात्प्रच्युतो भवेत् ।
×स्वधर्मस्थान्यतीन्वृद्धान्देवांश्च प्रणमेद्यतिः ॥
नान्यमाश्रमिणं कंचित्प्रशस्तमपि संनमेत् ।
अपि शास्त्रसमायुक्तं सदाचारसमन्वितम् ॥
साधुवृत्तं गृहस्थाढ्यं न नमस्येत्कचिद्यतिः ।

जाबालः—अजिह्वः षण्डकः पङ्गुरन्धो बधिर एव च ।
मुग्धश्च मुच्यते भिक्षुः षड्भिरेतैर्न संशयः ॥
इदमिष्टमिदं नेति योऽश्नन्नपि न सज्जते ।
हितं सत्यं मितं वक्ति तमजिह्वं प्रचक्षते ॥

* अयं श्लोको घ. पुस्तक एव वर्तते । + घ. पुस्तके समासे व्रतशब्दो यद्यपि तथाऽप्यत्र संन्यासपरः । तथा च संन्यासवृद्धानामित्यर्थः । × घ. पुस्तके समासे—स्वधर्मः श्रवणादिरेव तन्निष्ठावत इत्यर्थः । 'विष्णुरूपेण वै कुर्यान्नमस्कारं विधानतः इति वा पाठः । तत्र विष्णुरूपेणेति 'नमो वो हरिस्वामिने' इत्यष्टाक्षरेण नमस्कुर्यादित्यर्थः ।

१ क. ख. ग. ध्यानं शौ°। २ ग. °न्यासिध°। ३ ग. घ. नुद्वेगो ब्र°। ४ ग. घ. °पि तं न°।

सद्योजातां यथा नारीं तथा षोडशवार्षिकीम्।
शतवर्षां च यो दृष्ट्वा निर्विकारः स षण्डकः॥
भिक्षार्थमटनं यस्य विण्मूत्रकरणाय च।
योजनान्न परं याति सर्वथा पङ्गुरेव सः॥
तिष्ठतो व्रजतो वाऽपि यस्य चक्षुर्न दूरगम्।
चतुर्युगां भुवं मुक्त्वा परिव्राट्सोऽन्ध उच्यते॥
हितं मितं मनोरामं वचः शोकापहं च यत्।
श्रुत्वा च यो न शृणुते बधिरः स प्रकीर्तितः॥
सांनिध्ये विषयाणां च समर्थोऽविकलेन्द्रियः।
सुप्तवद्वर्तते नित्यं भिक्षुर्मुग्धः स उच्यते।
न निन्दां न स्तुतिं कुर्यान्न कंचिन्मर्मणि स्पृशेत्॥
न संभाषेत्स्त्रियं कांचित्पूर्वदृष्टां न च स्मरेत्।
कथां च वर्जयेत्तासां न पश्येल्लिखितामपि॥
एतच्चतुष्टयं मोहात्स्त्रीणामाचरतो यतेः।
चित्तं विक्रियतेऽवश्यं तद्विकारात्प्रणश्यति॥
स्त्रीणामवाच्यदेशस्य क्लिन्ननाडीव्रणस्य च।
अभेदेऽपि मनोभेदाज्जनः प्रायेण वञ्च्यते॥
विष्णुपुराणे—क्व शरीरमशेषाणां श्लेष्मादीनां महाचयः।
क्व कान्तिशोभासौरभ्यकमनीयादयो गुणाः॥
मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ।
देहे चेत्प्रीतिमान्मूढो भविता नरकेऽपि सः॥
अग्नेः शीतेन तोयस्य तृषा भक्षस्य च क्षुधा।
क्रियते सुखकर्तृत्वं तद्विलोमस्य चेतरैः॥
क्षुत्तृष्णोपशमं तद्वच्छीताद्युपशमं सुखम्।
मन्यते बालबुद्धित्वाद्दुःखमेव हि तत्पुनः॥
करोति हे दैत्यसुता यावन्मात्रं परिग्रहम्।
तावन्मात्रं स एवास्य दुःखं चेतसि गच्छति॥
महाभारते गीतासु—अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम्।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः॥
इन्द्रियार्थेषु वैराग्यमनहंकार एव च।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्॥

१ क. ग. घ. °यः। स्वप्नव°।

असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥
असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥
बुद्ध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च ।
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥
अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥
ब्रह्मभूतः[1] प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥
भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥
अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥
संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥
यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥
समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥
तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥

---

१ ख. घ. °तः प्रशान्ता° ।

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥

तथा भारते—

अमृतं चैव मृत्युश्च द्वयं देहे प्रतिष्ठितम् ।
मृषेणाऽऽसाद्यते मृत्युः सत्येनाऽऽसाद्यतेऽमृतम् ॥
न यज्ञफलदानादिनियमास्तारयन्ति हि ।
यथा सत्यं परं लोके पुरुषं पुरुषर्षभ ॥
अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्रात्तु सत्यमेव विशिष्यते ॥
असत्यमपि वक्तव्यं गोब्राह्मणहिताय वै ।
सत्यादपि हि तत्सत्यं न सत्यं सत्यमुच्यते ॥
आयुस्तेजो बलं वीर्यं प्रज्ञा श्रीश्च महद्यशः ।
पुण्यं च मत्प्रियत्वं च लभ्यते ब्रह्मचर्यया ॥
बहिर्भ्रमति यः कश्चित्त्यक्त्वा देहस्थमीश्वरम् ।
स्वगृहे पायसं त्यक्त्वा भिक्षामटति दुर्मतिः ॥

व्यासः—यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥
न सुखं देवराजस्य न सुखं चक्रवर्तिनः ।
यादृशं वीतरागस्य मुनेरेकान्तवासिनः ॥

बृहस्पतिः—गर्भे व्याधौ श्मशाने च पुराणे जायते मतिः ।
सैव चेत्सर्वदा तिष्ठेत्को न मुच्येत बन्धनात् ॥
प्राणा यथाऽऽत्मनोऽभीष्टा भूतानामपि ते तथा ।
आत्मौपम्येन सर्वत्र दयां कुर्वीत मानवः ॥
अपकारिणि चेत्कोपः कोपे कोपः कथं न ते ।
धर्मार्थकाममोक्षाणां प्रसह्य परिपन्थिनि ॥
शोको नाशयति प्रज्ञां शोको नाशयति श्रुतम् ।
धृतिं विनाशयेच्छोको नास्ति शोकसमो रिपुः ॥
[ *आचाराल्लभते धर्ममाचाराल्लभते धनम् ।
आचारात्सर्वमाप्नोति आचारो हंसलक्षणम् ॥ ]

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तक एव ।

---

१ ग. भागवते ।

रागान्धो हि जनः सर्वो न पश्यति हिताहितम् ।
रागं तस्मान्न कुर्वीत यदीच्छेदात्मनो हितम् ॥
क्षमातीर्थं तपस्तीर्थं तीर्थमिन्द्रियनिग्रहः ।
सर्वभूतदयातीर्थं ध्यानतीर्थमनुत्तमम् ॥
एतानि पञ्च तीर्थानि सत्यषष्ठानि सर्वदा ।
देहे तिष्ठन्ति सर्वस्य एषु स्नानं समाचरेत् ॥
न तथा पुष्करे स्नात्वा गयायां कुरुजाङ्गले ।
मुच्यते पुरुषः पापाद्यथा स्नातः क्षमादिषु ॥
निगृहीतेन्द्रियग्रामो यत्र यत्र वसेन्नरः ।
तत्र तत्र कुरुक्षेत्रं निमिषं पुष्कराणि च ॥
इदं तीर्थमिदं नेति ये नरा भेददर्शिनः ।
तेषां विधीयते तीर्थगमनं तत्फलानि च ॥
सर्वं ब्रह्मेति यो वेत्ति न तीर्थं तस्य किंचन ।
जाग्रत्स्वप्नसुषुप्तेषु ब्रह्मण्येव स वर्तते ॥
स्नानं मनोमलत्यागो दानं चाभयदक्षिणा ।
ज्ञानं तत्त्वार्थसंबोधो ध्यानं निर्विषयं मनः ॥
मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः ।
तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ॥

भगवद्गीतासु—संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥
शनैःशनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥
यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥

योगशास्त्रे च—वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि ।
एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते ॥

वेदव्यासः—अहिंसा सत्यमस्तेयं ब्रह्मचर्यं तपः परम् ।
क्षमा दया च संतोषो व्रतान्यस्य विशेषतः ॥

वायुपुराणे—आहारशुद्धिर्विनयः शौचं मत्प्रीतिकर्म च ।
सम्यग्दर्शनमित्येवं पञ्चैवोपव्रतानि च ॥

यतिधर्मसमुच्चये—सर्वयज्ञेषु यद्दानं सर्वतीर्थेषु यत्फलम् ।
सर्वदानफलं वाऽपि तन्न तुल्यमहिंसया ॥

सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥
असत्यमपि वक्तव्यं गोब्राह्मणहिताय च ।
सत्यादपि हि तत्सत्यं न सत्यं सत्यमुच्यते ॥
परमापद्गतेनापि न कार्यं स्तेयकर्म हि ।
स्तेयादप्यधिकः कश्चिन्नास्त्यधर्म इति स्मृतिः ॥
वायुपुराणे—द्वेषमूलं भयं यस्माद्द्वेषाभावे भयं कुतः ।
द्वेषश्च रागमूलः स्याद्ब्रह्मचर्यं च नाशयेत् ॥
ब्रह्मचर्याद्ब्राह्मणस्य ब्राह्मणत्वं विधीयते ।
एवमाहुः परे लोके ब्रह्मचर्यविदो जनाः ॥
ब्रह्मचर्ये स्थितं धैर्यं ब्रह्मचर्ये स्थितं तपः ।
ये स्थिता ब्रह्मचर्येण ब्राह्मणास्ते दिवि स्थिताः ॥
व्यासः—गुरुमूलाः क्रियाः सर्वा भुक्तिमुक्तिफलप्रदाः ।
तस्मात्सेव्यो गुरुर्नित्यं मुक्त्यर्थं तु समाहितैः ॥
न कुर्यान्नियमारम्भमनिवेद्य स्वकं गुरुम् ।
छायाभूतः परित्यागी नित्यमेव वसेद्गुरौ ॥
श्रद्धया परया युक्तः सदा द्वादश संध्ययोः ।
*दण्डप्रणामान्कुर्वीत +देवतागुरुसंनिधौ ॥
नातिक्रमेत मर्यादां गुरुणा या प्रकीर्तिता ।
गुरुशुश्रूषणं नाम धर्मो ज्येष्ठः प्रकीर्तितः ॥
गुरोर्नैवाप्रियं कुर्यात्पण्डिते पतितेऽपि वा ।
नाऽऽभाषयेच्च तद्वाक्यं नावमानं समाचरेत् ॥
आचार्यस्य प्रियं कुर्यात्प्राणैरपि धनैरपि ।
कर्मणा मनसा वाचा स याति परमां गतिम् ॥
आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् ।
न मर्त्यबुध्याऽसूयेत सर्वदेवमयो गुरुः ॥
मनुः—गुरोर्यत्र परीवादो निन्दा वाऽपि प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥

* घ. पुस्तके समासे–दण्डवत्प्रणामान् । न तु दण्डेन प्रणामानित्यर्थः । + घ. पुस्तके समासे–देवतावद्गुरुसंनिधावित्यर्थः ।

१ क. °यमल्पकम् । स्ते° । २ ग. घ. त्यं युक्त्यार्थं सुसमाहितः । न ।

गुरोश्च चक्षुर्विषये न यथेष्टासनो भवेत् ।
न देशो न च कालोऽस्ति न हिंसा गुरुकर्मसु ॥
सर्वत्रैवानुकूलः स्यादेतावान्धर्मसंग्रहः ।
नोदाहरेदस्य नाम परोक्षमपि केवलम् ॥
नैव चास्यानुकुर्वीत गतिभाषणचेष्टितम् ।

आपस्तम्बः—" देवमिवाऽऽचार्यमुपासीत " इति । मन्वाद्युक्ता ब्रह्मचारिधर्मा यतिभिरपि कर्तव्याः । ' ब्रह्मचारिणि ये धर्मा गुरुशुश्रूषणादयः । ते सर्वेऽपि यतीनां स्युः स्त्रीणां भैक्ष्यविवर्जिताः ' इति बह्वृचपरिशिष्टेऽतिदेशात् ।

मनुः—आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः ।
हीनान्नवस्त्रवेषः स्यात्सर्वदा गुरुसंनिधौ ॥
उत्तिष्ठेत्प्रथमं चास्य चरमं चैव संविशेत् ।
प्रतिश्रवणसंभाषे शयानो न समाचरेत् ॥
नाऽऽसीनो न च भुञ्जानो न तिष्ठन्न पराङ्मुखः ।
आसीनस्य स्थितः कुर्यादभिगच्छंस्तु पृष्ठतः ॥
नाऽऽसीनो नाऽऽसनस्थो वा नित्यं स्याद्गुरुसंनिधौ ।

तथा—गुरोर्गुरौ संनिहिते गुरुवद्वृत्तिमाचरेत् ।
न चातिसृष्टो गुरुणा स्वान्गुरून[1]भिवादयेत् ॥
विद्यागुरुष्वेवमेव नित्या वृत्तिः स्वयोनिषु ।
प्रेयःसु गुरुवद्वृत्तिं नित्यमेव समाचरेत् ॥

आपस्तम्बः—' आहूताध्यायी च स्यात्सदा निशायां गुरुं संविशेत् । तस्य पादौ प्रक्षाल्य संवाह्यानुज्ञातः संविशेत् '

मनुः—अल्पान्नाभ्यवहारेण रहःस्थानासनेन च ।
ह्रियमाणानि विषयैरिन्द्रियाणि निवर्तयेत् ॥
इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च ।
अहिंसया च भूतानाममृतत्वाय कल्पते ॥
अवेक्षेत गतीर्नॄणां कर्मदोषसमुद्भवाः ।
निरये चैव पतनं यातनाश्च यमक्षये ॥

१ घ. ˚हनविवा˚ ।

विप्रयोगं प्रियैश्चैव संप्रयोगं तथाऽप्रियैः ।[1]
जरया चाभिभवनं व्याधिभिश्चोपपीडनम् ॥
देहादुत्क्रमणं चास्मात्पुनर्गर्भे च संभवम् ।
योनिकोटिसहस्रेषु सृतीश्चास्यान्तरात्मनः ॥
अधर्मप्रभवं चैव दुःखयोगं शरीरिणाम् ।
धर्मार्थप्रभवं चापि सुखमक्षयमेव च ॥
सूक्ष्मतां चान्ववेक्षेत योगेन परमात्मनः ।
देहेषु चैवोपपत्तिमुत्तमेष्वधमेषु च ॥
भूषितोऽपि चरेद्धर्मं यत्र तत्राऽऽश्रमे रतः ।
समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम् ॥

आश्रमलिङ्गैर्दण्डादिभिर्भूषितो युक्तः । अपिशब्दात्तैर्हीनोऽपि जीवपरमात्मनोरेकत्वानुसंधानलक्षणं धर्मं चरेत् । तथा च याज्ञवल्क्यः—'अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम्। पुनरपि किंविशिष्टश्चरेदित्यत आह—यत्रेत्यादि । यत्र आश्रम आत्मदर्शनविरोधिभूतकर्मतत्साधनोपवीतादिलिङ्गं नास्ति तत्र परमहंसवृत्तौ रतस्तात्पर्येणावस्थितः सन्निति ।

व्यासः—लिङ्गेऽसत्यपि खल्वस्मिञ्ज्ञानमेव हि कारणम् ।
निर्मोक्षायेह भूतानां लिङ्गग्राहो निरर्थकः ॥
तस्मादलिङ्गो धर्मज्ञो ब्रह्मन्ब्रह्मण्यनुव्रतः ।[2]
लिङ्गाभावात्तु कैवल्यमिति हि श्रुतिशासनम् ॥

पितामहः—गूढधर्माश्रितो विद्वानज्ञातचरितं चरेत् ।
संदिग्धः सर्वभूतानां वर्णाश्रमविवर्जितः ॥
अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् ।
संदिग्धः सर्वभूतानां लिङ्गाश्रमविवर्जितः ॥
तं दृष्ट्वा शान्तमनसं स्पृहयन्ति दिवौकसः ।
वर्णाश्रमाणां धर्मो हि देवस्थानेषु कारणम् ॥
लिङ्गाभावात्तु कैवल्यमिति ब्रह्मानुशासनम् ।
मोक्षधर्मेषु निरतो लब्धाहारो जितेन्द्रियः ॥[3]
संप्राप्तो ब्रह्मणः स्थानं यत्परं प्रकृतेर्ध्रुवम् ।
वीततृष्णं निरानन्दं निराशं निष्परिग्रहम् ॥

---

१ ख. °संयोगं च त° । २ क. ख. ह्मव्रतमनु° । ३ ख. लब्धाहा° ।

सर्वतः सुखमभ्येति जलानीव महोदधिम् ।
नात्यक्त्वा सुखमाप्नोति नात्यक्त्वा विन्दते परम् ॥
नात्यक्त्वा वाऽभयं शेते सर्वं त्यक्त्वा सुखी भवेत् ।
[ *यतो यतो निवर्तेत विमुच्येत ततस्ततः ॥
एष धर्मो नृणां मोक्षे शोकमोहभयापहः । ]
आत्मचिन्ताविनोदेन शौचक्रीडनकेन च ॥
सर्वभूतसमत्वेन योगः सिध्यति नान्यथा ।
आत्मानन्दश्च सततमात्मन्येव समाहितः ॥
रतश्चैव सुतृप्तश्च संतुष्टो नान्यमानसः ।
आत्मन्येव सुतृप्तश्च योगः सिध्यति नान्यथा ॥
स्वप्नेऽपि यो हि युक्तः स्याज्जाग्रतीव विशेषतः ।
ईदृक्चेष्टः स्मृतः श्रेष्ठो वरिष्ठो ब्रह्मवादिनाम् ॥

पाराशरः—[ +स्नानं त्रिषवणं प्रोक्तं नियमाः स्युस्त्रिदण्डिनाम् ।
न तत्परमहंसानां मुक्तानामात्मदर्शिनाम् ॥ ]
संदिग्धः सर्वभूतानां वर्णाश्रमविवर्जितः ।
तं दृष्ट्वा शान्तमनसं स्पृहयन्ति दिवौकसः ॥
नाध्येतव्यं न वक्तव्यं न श्रोतव्यं कदाचन ।
एवं ज्ञानपरो योगी ब्रह्मभूयाय कल्पते ॥

शङ्खः—पर्यटनशीलः स्यादात्मज्ञानार्थम् । तदवाप्योर्ध्वमेकस्थानरतिस्तदभ्यासपरो नैकदेशे मूत्रपुरीषे चेति ।

पौराणिकः—नैव धर्मी न चाधर्मी न चापीह शुभाशुभी ।
भिक्षाशी सर्ववर्णेषु तुल्यनिन्दास्तुतिः क्षमी ॥
निस्तरङ्गवदम्भोधिस्स्थिरधीः सर्वदाऽऽत्मवान् ।
समः सर्वेषु भूतेषु परहंसः स उच्यते ॥

काण्वायनः–तत्र परमहंसा नाम एकदण्डधरा मुण्डास्तथा कौपीनवाससोऽव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तः शिखायज्ञोपवीतत्रिदण्डकमण्डलुकपालानां च त्यागिनः शून्यागारदेवगृह-

* धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तके वर्तते । + धनुश्चिह्नान्तर्गतो ग्रन्थः ग. घ. पुस्तकयोर्नास्ति ।

१ ग. घ. एभिर्गुणैश्च संपन्नो यतिर्भवति नेतरः ञ° ।

वासिनो न तेषां धर्मो नाधर्मो न सत्यं नापि चानृतं सर्वसहाः सर्वसमाः समलोष्टाश्मकाञ्चना उपपन्नमात्राहाराश्चातुर्वर्ण्यं भैक्षं चरन्त आत्मानं मोक्षयन्त इति।

अयाचितं यथालाभं भोजनाच्छादनं भवेत्।
परेच्छया च दिग्वासाः स्नानं कुर्यात्परेच्छया॥

अथ ब्राह्मणलक्षणमाह व्यासः—

अनुत्तरीयवसनमनुपस्तीर्यशायिनम्।
बाहूपधायिनं शान्तं तं देवा ब्राह्मणं विदुः॥
येन केनचिदाच्छन्नो येन केनचिदाशितः।
यत्रक्वचनशायी स्यात्तं देवा ब्राह्मणं विदुः॥
कन्थाकौपीनवासा यो दण्डधृग्ध्यानतत्परः।
एकाकी रमते नित्यं तं देवा ब्राह्मणं विदुः॥
निराशिषमनारम्भं निर्नमस्कारमस्तुतिम्।
अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः॥
जन्मना यस्तु निर्विण्णो मरणेन तथैव च।
आधिभिर्व्याधिभिश्चैव तं देवा ब्राह्मणं विदुः॥
अहेरिव गणाद्भीतः सन्मानान्मरणादिव।
कुणपादिव यः स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः॥
येन पूर्णमिवाऽऽकाशं भवत्येकेन सर्वदा।
शून्यं यस्य जनाकीर्णं तं देवा ब्राह्मणं विदुः॥
श्रद्धा ध्यानं तपः शौचं वित्तं यस्य चतुष्टयम्[1]।
स्मरणं चाद्वितीयस्य तं देवा ब्राह्मणं विदुः॥
न जातिः कारणं तात गुणाः कल्याणकारणम्[2]।
वृत्तस्थमपि चाण्डालं तं देवा ब्राह्मणं विदुः॥
परिबोधात्[3]परिच्छेदात्परिपूर्णावलोकनात्।
परिपूर्णफलत्वाच्च[4] परिव्राजक उच्यते॥
परं वा व्रजते नित्यं परं वोत्सृजते[5] पुनः।
हित्वा चैव परं जन्म परिव्राजक उच्यते॥

१ घ. °म्। रमणं। २ ग. °म्। सद्वृत्तम°। ३ ग. धात्प्रविच्छे°। ४ क. °च्च तं देवा ब्राह्मणं विदुः। परं। ५ ख. चोपसृते।

अत्राऽऽत्मव्यतिरेकेण द्वितीयं यो न पश्यति ।
ब्रह्मीभूतः स एवेह दक्षपक्ष उदाहृतः ॥
घटाकाशो घटे भग्ने यथेयात्परमम्बरम् ।
एवमेवंविधो भिक्षुः प्रयाति परमं पदम् ॥
वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि ।
एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते ॥
सर्वं ब्रह्मेति यो वेत्ति न तीर्थं तस्य किंचन ।
जाग्रत्स्वप्नसुषुप्तेषु ब्रह्मण्येव स वर्तते ॥
सर्वमन्यत्परित्यज्य बुध्द्या तन्निष्ठतां गतः ।
उपविष्टो व्रजंस्तिष्ठंस्तन्मयः स्यात्समाहितः[१] ॥
यो हि नित्यं सर्वसहश्चित्स्वरूपो निरञ्जनः ।
देहेन्द्रियमनोबुद्धिव्यतिरिक्तोऽहमेव सः ॥
देशबन्धुसुहृन्मित्रपिण्डप्राणमनोधियाम् ।
पूर्वं पूर्वं त्यजेत्पश्चात्परमानन्दमाविशेत् ॥
आत्मनिष्ठः सदा युक्तस्त्यक्तसर्वपरिग्रहः ।
चतुर्थोऽयं तु विज्ञेयो ध्यानभिक्षुरुदाहृतः ॥
ब्रह्मनिष्ठो भवेन्नित्यं यः परिव्राडतन्द्रितः ।
स ब्रह्म परमं ह्येति ने[२] चेहाऽऽजायते पुनः ॥
इन्द्रियाणीन्द्रियार्थेभ्यः प्रत्याहृत्य मनश्चलम् ।
प्रत्यगात्मनि संस्थाप्य ध्यानं कुर्याद्यतिः सदा ॥
एतावतैव पर्याप्तं भिक्षोरेकान्तशीलिनः ।
न तस्य म्रियते कश्चिन्म्रियते स न कस्यचित् ॥
कोऽहं कस्य कुतो वेति कः कथं वा भवेदिति ।
प्रयोजकमतिर्नित्यमेवं मोक्षाश्रमी भवेत् ॥

नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता[३] नित्यता च ।
शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः ॥

कूर्मपुराणे शिवगीतासु—प्राणायामस्तथा ध्यानं प्रत्याहारोऽथ धारणा ।
समाधिश्च मुनिश्रेष्ठा यमो नियम आसनम् ॥
मय्येकचित्तता योगो वृत्त्यन्तरनिरोधतः ।
तत्साधनान्यष्टधा तु युष्माकं कथितानि च ॥

---

१ क. ख. °तः नित्यं सर्वसहः सूक्ष्मश्चि° । २ ख. न तदा जा° । ३ क. °ता सत्यता ।

अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।
यमाः संक्षेपतः प्रोक्ताश्चित्तशुद्धिप्रदा नृणाम् ॥
कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा ।
अक्लेशजननं प्रोक्ता त्वहिंसा परमर्षिभिः ॥
अहिंसायाः परो धर्मो नास्त्यहिंसा परं सुखम् ।
विधिना या भवेद्धिंसा सा त्वहिंसैव कीर्तिता ॥
सत्येन सर्वमाप्नोति सत्ये सर्वं प्रतिष्ठितम् ।
यथार्थकथनाचारः सत्यं प्रोक्तं द्विजातिभिः ॥
परद्रव्यापहरणं चौर्याद्वाऽथ बलेन वा ।
स्तेयं तस्यानाचरणादस्तेयं धर्मसाधनम् ॥
कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा ।
सर्वत्र मैथुनत्यागं ब्रह्मचर्यं प्रचक्षते ॥
द्रव्याणामप्यनादानमापद्यपि तथेच्छया ।
अपरिग्रह इत्याहुस्तत्प्रयत्नेन[1] पालयेत् ॥
तपःस्वाध्यायसंतोषाः शौचमीश्वरपूजनम् ।
[2]समासान्नियमाः प्रोक्ता योगसिद्धिप्रदायकाः ॥

मनुः—द्रव्ययज्ञाज्जपो यज्ञो विशिष्टो दशभिर्गुणैः ।
उपांशुः स्याच्छतगुणः सहस्रो मानसः स्मृतः ॥

कौर्मे—वेदान्तशतरुद्रीयप्रणवानां जपं बुधाः ।
सत्त्वशुद्धिकरं पुंसां स्वाध्यायं परिचक्षते ॥
स्वाध्यायस्य त्रयो भेदा वाचिकोपांशुमानसाः ।
उत्तरोत्तरवैशिष्ट्यं प्राहुर्वेदार्थवादिनः ॥
यः शब्दो बोधजननः परेषां शृण्वतां स्फुटम् ।
स्वाध्यायो वाचिकः प्रोक्त उपांशोरथ लक्षणम् ॥
ओष्ठयोः स्पन्दमात्रेण[3] परस्याशब्दबोधकः ।
उपांशुरेष निर्दिष्टः साहस्रो वाचिकाज्जपात् ॥
यत्पदाक्षरसंगत्या परिस्पन्दनवर्जितम् ।
चिन्तनं सर्वशब्दानां मानसं तज्जपं विदुः ॥
यदृच्छालाभतो नित्यमलं पुंसो भवेदिति ।
अवस्थामृषयः प्राहुः संतोषं सुखलक्षणम् ॥

१ ग. °न पाल्यते । २ क समस्ता नियः । ३ क. °णं शब्दो यः परबोधकः ।

बाह्यमाभ्यन्तरं शौचं द्विधा प्रोक्तं द्विजोत्तमाः ।
मृज्जलाभ्यां स्मृतं बाह्यं मनःशुद्धिस्तथाऽऽन्तरम् ॥
स्तुतिस्मरणपूजाभिर्वाङ्मनःकायकर्मभिः ।
सुनिश्चला शिवे भक्तिरेतदीश्वरपूजनम् ॥
इन्द्रियाणां विचरतां विषयेषु स्वभावतः ।
निग्रहः प्रोच्यते सद्भिः प्रत्याहारः स सत्तमाः ॥
हृत्पुण्डरीके नाभ्यां वा मूर्ध्नि पर्वसु मस्तके ।
एवमादिषु देशेषु धारणा चित्तबन्धनम् ॥
तेषामास्थितमालम्ब्य बुद्धेर्या वृत्तिसंततिः ।
प्रत्ययान्यैरसंस्पृष्टा तद्ध्यानं सूरयो विदुः ॥
एकाकारः समाधिः स्याद्देशालम्बनवर्जितः ।
प्रत्ययो ह्यर्थमात्रेण योगशासनमुत्तमम् ॥
धारणा द्वादश यमा ध्यानं द्वादश धारणाः ।
ध्यानं द्वादशकं यावत्समाधिरभिधीयते ॥
आसनं स्वस्तिकं प्रोक्तं पद्ममर्धासनं तथा ।
साधनानां च सर्वेषामेतत्साधनमुत्तमम् ॥
ऊर्वोरुपरि विप्रेन्द्राः कृत्वा पादतले उभे ।
समासीताऽऽत्मनः पद्ममेतदासनमुत्तमम् ॥
एकं पादमथैकस्मिन्विन्यस्योरुणि सत्तमाः ।
आसीतार्धासनमिदं योगसाधनमुत्तमम् ॥
उभे कृत्वा पादतले जानूर्वोरन्तरेण हि ।
समासीताऽऽत्मनः प्रोक्तमासनं स्वस्तिकं परम् ॥
नद्यास्तीरे पुण्यदेशे देवतायतनेऽथ वा ।
गृहे वा सुशुभे देशे विजने जन्तुवर्जिते ॥
युञ्जीत योगी सततमात्मानं मत्परायणः ।

भगवद्गीतासु—शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्याऽऽसने युञ्ज्याद्योगमात्मविशुद्धये ॥
समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥

१ ख. यान्तैरसंसृष्टात्तद्ध्या॰ ।

प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चितो युक्त आसीत मत्परः ॥
युञ्जन्नेवं सदाऽऽत्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥

शिवगीतासु—सर्वकर्माणि संन्यस्य भिक्षाशी निष्परिग्रहः ।
प्राप्नोति मम सायुज्यं गुह्यमेतन्मयोदितम् ॥

मनुः—प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ।
विसृज्य ध्यानयोगेन ब्रह्माभ्येति सनातनम् ॥

भवति च ब्राह्मणम्—"तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां[1] द्विषन्तः पापकृत्याम्[2]" इत्यादि ।

योगो नाम मुख्यो[3] जीवस्य ब्रह्मणैक्यम् । कुतः । यतः—
वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि ।
एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते ॥

मनुः—प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्बिषम् ।
प्रत्याहारेण संसर्गान्ध्यानेनानीश्वरान्गुणान् ॥

यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयो धर्मशास्त्रे सम्यग्दर्शनसाधनत्वेन विहितास्त एव समाधिं वर्जयित्वाऽनेन श्लोकेनोच्यन्ते ।

सम्यग्दर्शनत्वेनैव तान्संक्षेपत उदाहरिष्यामः—
अहिंसा सत्यमस्तेयं ब्रह्मचर्यमसंग्रहः ।
यमास्तु कथिताश्चैते नियमानपि मे शृणु ॥
संतोषशौचस्वाध्यायास्तपश्चेश्वरभावना ।
नियमाः कौरवश्रेष्ठ फलसंसिद्धिहेतवः ॥
मध्यप्रमाणमचलं सुखदायि शुभं शुचि ।
योगसंसिद्धये भूप योगिनामासनं स्मृतम् ॥
प्राणायामस्तथा वायोः प्राणस्य हृदि धारणम् ।
कुम्भरेचकपूराख्यास्तस्य भेदास्त्रयो नृप ॥
इन्द्रियाणां स्वविषयाद्व्युद्धेः प्रत्येकशस्तु यः ।
करोत्याहरणं ज्ञेयः प्रत्याहारः स पण्डितैः ॥

१ ग. °कृत्यं । २ ग. °कृत्यम् । ३ ख. मुख्यस्य जी°।

शुभे ह्येकत्र विषये चेतसो यच्च धारणम्[1] ।
निश्चलत्वात्तु सा सद्भिर्धारणेत्यभिधीयते ॥
पौनःपुन्येन तत्रैव विषये सैव धारणा ।
ध्यानाख्यां लभते राजन्समाधिमपि मे शृणु ॥
अर्थमात्रं तु यद्ग्राह्यं चित्तमादाय पार्थिव ।
अर्थस्वरूपवद्भाति समाधिः सोऽभिधीयते ॥ इत्यादि ।

प्राणायामप्रत्याहारधारणात्मध्यानानां रागद्वेषादिविषयसंस्पर्शपापपरतन्त्रत्वादिगुणहानिस्त्ववान्तरफलम् । प्रधानफलं तु सम्यग्दर्शनमेव । सम्यग्दर्शनफलं च श्रुतिस्मृतिप्रसिद्धम्—" तरति शोकमात्मवित् " [ छा० ७।१।३ ]। स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति । तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति " [ मुण्ड० ३।२।९ ]। " भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे " [मुण्ड० २।२।८]। " अभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेद " [ बृह० ४।४।२५ ]। " नैनं कृताकृते तपतः " [ बृह०४।४।२२ ]। " तं विदित्वा न लिप्यते कर्मणा पापकेन " [बृह० ४।४।२३] इत्याद्याः श्रुतयः ।

मनुः—सम्यग्दर्शनसंपन्नः कर्मणा न स बध्यते ।
दर्शनेन विहीनस्तु संसारं प्रतिपद्यते ॥
बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः ।
ज्ञानदग्धैस्तथा क्लेशैर्नाऽऽत्मा संबध्यते तथा ॥

पिप्पलादश्रुतिः—" ज्ञानाग्निः शुभाशुभं दहति " इति ।

गीतासु—यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥

काठकोपनिषदि—" एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् " [ २।२।१२ ]। सामवेदतलवकारोपनिषदि—" यद्वाचाऽनभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" [ केनो० ख० ४]। "यन्मनसा न मनुते येनाऽऽहुर्मनो मतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते " [केनो० ख० ५]। "यच्चक्षुषा न पश्यति

---

१ क. घ. °ते । पुनः पुण्येन ।

येन चक्षूꣳषि पश्यति । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ” [केनो० ख० ६]। “ यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदꣳ श्रुतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ” ( केनो० ख० ७ )। “ यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ” [ के० ख० ८ ]। बृहदारण्यके–“ प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः । ते निचिक्युर्ब्रह्म पुराणमग्र्यम् ” [बृ० ४।४।१८]। “ मनसैवानुद्रष्टव्यं नेह नानाऽस्ति किंचन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ” [बृ०४।४।१९]। “ एकधैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम् । विरजः पर आकाशादज आत्मा महान्ध्रुवः ” [बृ० ४।४।२०]। “तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः। नानुध्यायाद्बहूञ्शब्दा न्वाचो विग्लापनꣳ हि तत् ” [ बृ० ४।४।२१ ]। “ आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ” [ बृ० ४।४।१२ ]। “ यदैतमनुपश्यत्यात्मानं देवमञ्जसा । ईशानं भूतभव्यस्य न ततो विजुगुप्सते ” [ बृ० ४।४।१५ ]। “यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ” [ बृ० ४।४।७ ]। “ विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम् ” [ बृ० ३।९।२८ ]। “ सत्यस्य सत्यमिति ” [ बृ० २। ३।६ ]। “महद्भूतमनन्तमपारं विज्ञानघन एव ”[बृ०२।४।१२]। “तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म ” [ बृ०२।५।१९ ]। “ स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्माभयं वै ब्रह्माभयꣳ हि वै ब्रह्म भवति य एवं वेद ” [ बृ० ४।४।२५ ]। यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः । कतमो याज्ञवल्क्य सर्वान्तरो योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति ” [ बृ० ३।५।१ ]। अथर्वणोपनिषदि—“ यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ” [ मुण्ड० १।१।६ ]।“ ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्ध्वं प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ” [ मुण्ड० २।२।११ ]। “ एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य ”[मुण्ड०२।१।१०]। तैत्तिरीयकम्—“ब्रह्मविदाप्नोति परम् । सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां परमे व्योमन्।सोऽश्नुते सर्वान्कामान्त्सह, ब्रह्मणा विपश्चितेति ” [ तैत्ति० २।१।१ ]। काठके–“ नित्योऽनित्यानां चेतनश्चेत-

नानामेको बहूनां यो विदधाति कामान् । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्" [२।२।१३]। "अशरीरꣳ शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति" [काठ० १।२।२२]। "स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति । महान्तं विभुमात्मानं मत्वा धीरो न शोचति" [काठ० २।१।४]। "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः। तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषिकां धैर्येण । तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति" [काठ० २।३।१७]। उत्तिष्ठत जाग्रत प्राप्यत वरान्निबोधत" [काठ० १।३।१४]। "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते" [काठ० १।३।१५]।

विष्णुपुराणे—विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मना ब्रह्मणो भेदमसन्तं कः करिष्यति ॥
अनात्मन्यात्मबुद्धिर्या स्वेऽस्वस्थमिति या मतिः[1] ।
अविद्यातरुसंभूतं बीजमेतद्द्विधा स्थितम् ॥
पञ्चभूतात्मके देहे देही मोहतमोवृतः ।
अहमेव तदित्युच्चैः[2] कुरुते कुमतिर्मतिम् ॥
अनेकजन्मसाहस्रीं संसारपदवीं व्रजेत् ।
मोहश्रमं प्रयातोऽसौ वासनारेणुगुण्ठितः ॥
प्रक्षाल्यते यदा सोऽस्य रेणुर्ज्ञानोष्णवारिणा ।
तदा संसारिपान्थस्य याति मोहश्रमः शमम् ॥

श्रीशंकराचार्यसुरेश्वराचार्ययोर्वचनानि—
अनात्मभूते देहादावात्मबुद्धिस्तु देहिनाम् ।
साऽविद्या तत्कृतो बन्धस्तन्नाशो मोक्ष उच्यते ॥
ऐकात्म्याप्रतिपत्तिर्याऽस्वात्मानुभवसंश्रया ।
साऽविद्या संसृतेर्बीजं तन्नाशो मुक्तिरात्मनः ॥
तत्त्वमस्यादिवाक्यार्थं यज्जीवपरमात्मनोः ।
तादात्म्यविषयं ज्ञानं तदिदं मुक्तिकारणम् ॥
को जीवः कः परश्चाऽऽत्मा तादात्म्यं वा कथं तयोः ।
तत्त्वमस्यादिवाक्यं वा कथं तत्प्रतिपादयेत्* ॥

* इत उत्तरमेतदर्धं क. ग. पुस्तकयोः—सत्यमाह भवानत्र विगानं नैव विद्यते । इति ।

१ क. ग. स्वे च स्वमि°। २ क. ख. ग. 'मेतदितीत्यु°।

हेतुः पदार्थबोधो हि वाक्यार्थावगतेरिति ।
अन्तःकरणतद्वृत्तिसाक्षी चैतन्यविग्रहः ॥
आनन्दरूपः सत्यः सन्किं नाऽऽत्मानं प्रपद्यसे ।
सत्यानन्दस्वरूपं धीसाक्षिणं ज्ञानविग्रहम् ॥
चिन्तयाऽऽत्मतया नित्यं त्यक्त्वा देहादिगां धियम् ।
रूपादिमान्यतः पिण्डस्ततो नाऽऽत्मा घटादिवत् ॥
पृथिव्यादिमहाभूतविकारत्वाच्च कुम्भवत् ।
एवमिन्द्रियदृङ्नाहमिन्द्रियाणीति निश्चिनु ॥
मनो बुद्धिस्तथा प्राणो नाहमित्यवधारय ।
संघातोऽपि तथा नाहमिति दृश्यविलक्षणम् ॥
द्रष्टारमनुमानेन निपुणं संप्रधारय ।
देहेन्द्रियादयो भावा हानादिव्यापृतिक्षमाः ॥
यस्य संनिधिमात्रेण सोऽहमित्यवधारय ।
अनापन्नविकारः सन्नयस्कान्तवदेव यः ॥
बुध्यादींश्चालयेत्प्रत्यक्सोऽहमित्यवधारय ।
अजडात्मवदाभान्ति यत्सांनिध्याज्जडा अपि ॥
देहेन्द्रियमनःप्राणाः सोऽहमित्यवधारय ।
अगमन्मे मनोऽन्यत्र सांप्रतं चास्थिरीकृतम् ॥
एवं यो वेद धीवृत्तं सोऽहमित्यवधारय ।
स्वप्नजागरिते सुप्तिं भावाभावौ धियां तथा ॥
यो वेत्त्यविक्रियः साक्षात्सोऽहमित्यवधारय[1] ।
घटावभासको दीपो घटादन्यो यथेक्षते ॥
देहावभासको देही तथाऽहं बोधविग्रहः ।
यः साक्षिलक्षणो बोधस्त्वंपदार्थः स उच्यते ॥
* साक्षित्वमपि बोधत्वमविकारिण आत्मनः ।
देहेन्द्रियमनःप्राणाहंकृतिभ्यो विलक्षणः ॥
प्रोज्झिताशेष[2]षड्भावविकारस्त्वंपदाभिधः ।
त्वमर्थमेवं निश्चित्य तदर्थं चिन्तयेत्पुनः ॥

* एतदर्धं न क. ग. घ. पुस्तकेषु ।

१ क. ख. °धेष्यते । २ ग. °षसद्भाव° ।

अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च ।
निरस्ताशेषसंसारदोषोऽस्थूलादिलक्षणः ॥
अदृश्यत्वादिगुणकः पराकृततमोमलः ।
निरस्तातिशयानन्दः सत्यप्रज्ञानविग्रहः ॥
सत्तास्वलक्षणः पूर्णः परमात्मेति गीयते ।
सर्वज्ञत्वं परेशत्वं तथा संपूर्णशक्तिता ॥
वेदैः समर्थ्यते यस्य तद्ब्रह्मेत्यवधारय ।
यज्ज्ञानात्सर्वविज्ञानं श्रुतिषु प्रतिपादितम् ॥
मृदाद्यनेकदृष्टान्तैस्तद्ब्रह्मेत्यवधारय ।
यदानन्त्यं प्रतिज्ञाय श्रुतिस्तत्सिद्धये जगौ ॥
तत्कार्यत्वं प्रपञ्चस्य तद्ब्रह्मेत्यवधारय ।
विजिज्ञास्यतया यच्च वेदान्तेषु मुमुक्षुभिः ॥
समर्थ्यतेऽतियत्नेन तद्ब्रह्मेत्यवधारय ।
जीवात्मनां प्रवेशश्च[1] नियन्तृत्वं च तान्प्रति ॥
श्रूयते यस्य वेदेषु तद्ब्रह्मेत्यवधारय ।
कर्मणां फलदातृत्वं श्रूयते च श्रुतौ स्फुटम् ॥
जीवानां हेतुकर्तृत्वं तद्ब्रह्मेत्यवधारय ।
तत्त्वंपदार्थौ निर्णीतौ वाक्यार्थश्चिन्त्यतेऽधुना ॥
तादात्म्यमत्र वाक्यार्थस्तयोरेव पदार्थयोः ।
संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः ॥
अखण्डैकरसत्वेन वाक्यार्थो विदुषां मतः ।
प्रत्यग्बोधो य आभाति सोऽद्वयानन्दलक्षणः ॥
अद्वयानन्दरूपश्च प्रत्यग्बोधैकलक्षणः ।
इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत् ॥
अब्रह्मत्वं त्वमर्थस्य व्यावर्तेत तदैव हि ।
तदर्थस्य च पारोक्ष्यं यद्येवं किं ततः शृणु ॥
पूर्णानन्दैकरूपेण प्रत्यग्बोधोऽवतिष्ठते ।
तत्त्वमस्यादिवाक्यं च तादात्म्यप्रतिबोधने ॥
लक्ष्यौ तत्त्वंपदार्थौ द्वावुपादाय प्रवर्तते ।
हित्वा द्वौ शबलौ वाच्यौ वाक्यं वाक्यार्थबोधने ॥

---

१ ग. प्रदेश°

यथा प्रवर्ततेऽस्माभिस्तथा व्याख्यातमादरात् ।
आलम्बनतया भाति योऽस्मत्प्रत्ययशब्दयोः ॥
अन्तःकरणसंभिन्नबोधः स त्वंपदाभिधः ।
मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः ॥
परोक्षः शबलः सत्याद्यात्मकस्तत्पदाभिधः ।
प्रत्यक्परोक्षतैकस्य सद्द्वितीयत्वपूर्णते ॥
विरुध्येते यतस्तस्माल्लक्षणा संप्रवर्तते ।
मानान्तरविरोधे तु मुख्यार्थस्य परिग्रहे ॥
मुख्यार्थेनाविनाभूते प्रतीतिर्लक्षणोच्यते ।
तत्त्वमस्यादिवाक्येषु लक्षणा भागलक्षणा ॥
सोऽहमित्यादिवाक्यस्थपदयोरिव नापरा* ।
अहं ब्रह्मेतिवाक्यार्थबोधो यावद्दृढी भवेत् ॥

* नापरा । इत्युत्तरमयं ग्रन्थो घ. पुस्तके । शौनकः—
आमन्त्रितो यदा भिक्षुरन्यत्र प्रतिगच्छति । सप्तजन्म भवेच्छूद्रो दशजन्म नपुंसकः ॥
देवो मुनिर्द्विजो राजा वैश्यः शूद्रो बिडालकः । पशुर्म्लेच्छश्च चाण्डालो विप्रा दशविधाः स्मृताः ॥
भिक्षाशी ज्ञाननिरतः संतुष्टश्च जितेन्द्रियः । वेदशास्त्रार्थतत्त्वज्ञो देवो विप्रः प्रकीर्तितः ॥
अकृष्टफलमूलाशी वनवासरतः सदा । कुरुतेऽहरहः श्राद्धं मुनिर्विप्रः स उच्यते ॥
एकाहारेण संतुष्टः स्वकर्मनिरतः सदा । ऋतुकालाभिमानी च स विप्रो द्विज उच्यते ॥
अश्ववाहनतत्त्वज्ञः सङ्ग्रामं न परित्यजेत् । आरम्भनिरतः शूरो ब्राह्मणः क्षत्रिय उच्यते ॥
लोककर्मसु निरतः पशूनां परिपालकः । वाणिज्यकृषिकर्ता च स विप्रो वैश्य उच्यते ॥
लाक्षादितैलनीलीनां कौसुम्भदधिसर्पिषाम् । दुग्धतक्रविक्रयी च स विप्रः शूद्र उच्यते ॥
परकार्यविहन्ता च दाम्भिकः स्वार्थसाधकः । छलमध अतिक्रूरो विप्रो मार्जार उच्यते ॥
भक्ष्याभक्ष्यं समं यस्य वाच्यावाच्यं प्रियाप्रियम् । करोत्यगम्यागमनं कृतघ्नो ब्राह्मणः पशुः ॥
वापीकूपतडागानामारामसुखवेश्मनाम् । विच्छेदने निरातङ्कः स विप्रो म्लेच्छ उच्यते ॥
देवद्रव्यगुरुद्रव्यपरदाररतः सदा । निष्ठुरः सर्वभूतानां विप्रश्चाण्डाल उच्यते ॥
ईर्ष्यालुः पिशुनश्चैव कृतघ्नो दीर्घरोषकः । चत्वारः कर्मचाण्डाला जातिचाण्डालपञ्चमाः ॥ इति ।
उदीच्याः कान्यकुब्जाश्च नागराश्चित्तपावनाः । गौतमीतीरवासाश्च इत्येते आर्यसंज्ञकाः ॥
आभीराः कर्कटाश्चैव द्राविडा दाक्षिणास्तथा । अवन्तीतीरवासाश्च ब्राह्मणास्ते हि मध्यमाः ॥
कार्श्वाकौशलसौराष्ट्राः* कावेरीतीरवासिनः । (!) कोङ्कणोद्भूता नीचास्ते ब्राह्मणाः स्मृताः ॥
* पुस्तके तु ष्ट्रा इत्यस्यानन्तरं काकपदमालिख्य तीरवासिन इति हरितालेन निष्कासितम् । कावेरीति च उत्तरार्धारम्भे योजितम् ।

१ ख. 'यस्यपूर्णता । विरुध्यते । २ क. ग. 'र्णता । विरुध्यते ।

शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम् ।
श्रुत्वाऽऽचार्यप्रसादेन दृढो बोधो यदा भवेत् ॥
निरस्ताशेषसंसारनिदानः पुरुषस्तदा ।
अहमेव परं ब्रह्म वासुदेवाख्यमव्ययम् ॥
इति स्यान्निश्चितो मुक्तो बद्ध एवान्यथा भवेत् ।
सर्वोपाधिविनिर्मुक्तं चैतन्यं च निर[1]ञ्जनम् ॥
तद्ब्रह्माहमिति ज्ञात्वा कथं वर्णाश्रमी भवेत् ।
ब्राह्मण्याद्यात्मके देहेऽनात्मन्यात्मेति भावनात् ॥
श्रुतेः किंकरतामेति वाङ्मनःकायकर्मसु ।
दग्धाखिलाधिकारश्चेद्ब्रह्मज्ञानाग्निना मुनिः ॥
वर्तमानः श्रुतेर्मूर्ध्नि नैव स्याद्विधिकिंकरः ।
विदेहो वीतसंदेहो नेति नेत्यवशेषितः ॥
देहाद्यनात्मदृक्तद्वद्विक्रियां वीक्षतेऽपि न ।
अज्ञानमनिराकुर्वज्ज्ञानमेव न सिध्यति ॥
विपन्ने कारके[2]ज्ञाने ज्ञानकर्म न ढौकते ।
सकृत्प्रवृत्त्या[3] यद्भाति क्रियाकारकरूपधृक् ॥
अज्ञानमागमज्ञानं सांगत्यं नास्त्यतोऽनयोः ।
वर्तमानमिदं याभ्यां शरीरं सुखदुःखदम् ॥
प्रारब्धं पुण्यपापाभ्यां भोगादेव तयोः क्षयः ।

सामर्थ्याद्येन कर्मणा शरीरं प्रारब्धं तत्प्रवृत्तफलत्वादुपभोगेनैव क्षीयते । अतो यान्यप्रवृत्तफलान्यतीतानेकजन्मकृतानि ज्ञानोत्पत्तेः प्राक्कृतानि ज्ञानसहभावीनि च तान्येव सर्वाणि कर्माणि ज्ञानाग्निर्भस्मसात्कुरुत इति जीवन्मुक्तिप्रतिपादकश्रुतिस्मृतिसामर्थ्यादवगम्यते । तथा च श्रुतिः—"सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव सवागवागिव समना अमना इव सप्राणोऽप्राण इव" "तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदम्" [ बृ० ४।४।७ ] इत्याद्या ।

मनुः—यदा भावेन भवति सर्वभावेषु निस्पृहः ।
तदा सुखमवाप्नोति प्रेत्य चेह च शाश्वतम् ॥
अनेन विधिना सर्वांस्त्यक्त्वा सङ्गाञ्शनैः शनैः ।
सर्वद्वंद्वविनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ॥

१ क. घ. °रन्तरम् । त° । २ क. °क ग्रामं ज्ञा° । ३ क. ख. घ. °त्या मृद्रा° ।

[ अ० ६ श्लो० ८१।८२ ] विद्ययाऽविद्यया परिकल्पितभेदजातं व्युदस्याद्वयानन्दप्रकाशब्रह्मभावेन भवत्यवतिष्ठते यदा, तदा भावेष्वाब्रह्मस्तम्बपर्यन्तेषु निस्पृहो भवतीत्यर्थः ।

महाभारते श्रीगीतासु भगवद्वचनानि—

प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।
आत्मन्येवाऽऽत्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥
दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥
यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥
यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥
योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥
नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ॥
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥
प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥
उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥
समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥
प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथाऽऽत्मानमकर्तारं स पश्यति ॥
यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥

छान्दोग्ये—"आचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये"[ ६।१४।२ ] इति । व्याससूत्रम्—" भोगेन त्वितरे

क्षपयित्वा संपद्यते "[अ०४ पा० १ सू०१४] इति। उदाहृतश्रुतिस्मृतिसूत्रेभ्यो ब्रह्मसाक्षात्कारवतो जीवन्मुक्तस्य प्रारब्धकर्मशेषवशाच्छरीरेन्द्रियादेर्विदेहकैवल्यप्राप्तिपर्यन्तमवस्थानं भवतीत्यवगम्यते।

इति श्रीपरमहंसपरिव्राजकविश्वेश्वरसरस्वतीविरचिते परमहंसपरिव्राजककर्मसंग्रहे ज्ञानान्तरङ्गधर्मसंग्रहः प्रथमः।

*ननु अस्ति चेदाश्रमोचितधर्मेष्वधिकारो यतेस्तर्हि तदङ्गभूताभ्यां शिखायज्ञोपवीताभ्यां भवितव्यमेव। मैवम्। बहिर्भूतशिखायज्ञोपवीताङ्गाभावेऽपि सामगस्य ब्रह्मचारिणः शिखाभावेऽपि वचनात्कर्मण्यधिकारवदधिकारोपपत्तेः। आन्तरशिखायज्ञोपवीतसद्भावाच्चाधिकारोऽस्त्येव। तथा चाऽऽथर्वणी श्रुतिः—

ज्ञानशिखा ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः।
ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते॥
अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा।
स शिखीत्युच्यते विद्वानितरे केशधारिणः॥ [ब्रह्मो०ख०३]।

आरुणी श्रुतिः—"खल्वहं ब्रह्मसूत्रं सूचनात्सूत्रं ब्रह्मसूत्रमहमेवेति विद्वांस्त्रिवृत्सूत्रं त्यजेद्विद्वान्य एवं वेद" [ख० ३] इति।

अत्रिः—ज्ञानशिखा ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः।
ज्ञानमेव परं तेषां पवित्रं कायशोधनम्॥

मैत्रायणीश्रुतिः-"[1]अयज्ञोपवीती शौचनिष्ठः काममेकं वैणवं दण्डमाददीत" इति।

---

* अधोलिखितो ग्रन्थो नान्वित्यतः प्राक् ग. घ. पुस्तकयोर्दृश्यते—

मनुरपि—अमुक्तयोरस्तगयोर्दृष्ट्वा स्नात्वा परेऽहनि।

विष्णुधर्मामृतेऽपि—

अहोरात्रे न भोक्तव्यं चन्द्रसूर्यग्रहे यदा। मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परम्।

इतीदमपि प्रस्तास्तविषयम्। चन्द्रसूर्यग्रहे नाद्यात्तस्मिन्नहनि पूर्वतः। राहोर्विमुक्तिं ज्ञात्वा ये स्नात्वा कुर्वीत भोजनम्।

गालवोऽपि-यस्त्रिरात्रमुपोष्यैव ग्रहणे चन्द्रसूर्ययोः। स्नात्वा दत्त्वा च विधिवन्मोदते ब्रह्मणा सह।
एकरात्रमुपोष्यैव स्नात्वा दत्त्वा च शक्तितः। कञ्चुकादिव सर्पस्य निष्कृतिः पापकोशतः।
आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः। नोपवासं गृही कुर्यात्पुत्रदारधनक्षयात्॥
सायाह्ने संगवेऽश्नीयाच्छारदे संगवादधः। मध्याह्ने परतोऽश्नीयान्नोपवासो रविग्रहे।

१ क. अथ य°।

शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् ।
ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः ॥
इदं यज्ञोपवीतं तु परमं यत्परायणम् ।
विद्वान्यज्ञोपवीती स्याद्यज्ञस्तं यज्विनं विदुः ॥

इदमेवास्य तद्यज्ञोपवीतं यदात्मध्यानं विद्या शिखा नीरैः सर्वत्रावस्थितैः कार्यं निर्वर्तयेदिति । अथ ब्राह्मे मुहूर्त उत्थाय भगवन्तमात्मत्वेन स्मृत्वा मूत्रपुरीषोत्सर्गं विधिवत्कुर्यात् । तत्र च बह्वृचपरिशिष्टे—

ततश्च दिशि नैर्ऋत्यां कर्णसूत्र उदङ्मुखः* ।
अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा ॥
वाचं नियम्य यत्नेन निष्ठीवोच्छ्वासवर्जितः ।
कुर्यान्मूत्रपुरीषे तु शुचौ देशे समाहितः ॥ इति ।

कर्णसूत्र इत्येतद्गृहस्थादिविषयम् । अन्यत्साधारणम् । तृणैरयज्ञियैः । तृणग्रहणमुपलक्षणार्थम् ।

तिरस्कृत्य चरेत्काष्ठं पत्रं लोष्टं तृणानि वा ।
नियम्य प्रयतो वाचं संवीताङ्गोऽवगुण्ठितः ॥
उभे मूत्रपुरीषे तु दिवा कुर्यादुदङ्मुखः ।
रात्रौ तु दक्षिणे कुर्यादुभे संध्ये दिवा यथा ॥ इति ।
प्रत्यादित्यं प्रत्यनिलं प्रतिगां प्रति च द्विजम् ।
मेहन्ति ये च पथिषु ते भवन्ति गतायुषः ॥

न[1] मेहनं कुर्याद्भस्मनि न गोमये न च गोष्ठे नोप्ते न शाड्वलोपजीव्यच्छायासु ।

शतहस्तं परित्यज्य मूत्रं कुर्याज्जलाश्रयात् ।
शतद्वयं पुरीषे तु तीर्थे चैव चतुर्गुणम् ॥
छायायामन्धकारे वा रात्रावहनि वा द्विजः ।
यथासुखमुखः कुर्यात्प्राणबाधाभयेषु च ॥

* उदङ्मुख इत्युत्तरं घ. पुस्तके 'दिवा संध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः' इति श्लोकार्धं विद्यते ।

१ ग. न मूत्रे मेहनं कुर्याद्भस्मनि गोमयेन च । उपजीव्यस्थयात्रो (?) च गोष्ठे नोप्ते न शाड्वले । श° ।

याज्ञवल्क्यः–गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ।
गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥

उद्धृताभिरिति जलान्तःशौचनिषेधः । अत्र गन्धलेपक्षयकरमिति सर्वाश्रमिणां साधारणमिदं शौचम् । मृत्संख्यादिनियमस्त्वदृष्टार्थः ।

भरद्वाजः–अपकृष्य च विण्मूत्रे काष्ठलोष्टतृणादिना ।
उदस्तवासा उत्तिष्ठेद्दृढं विधृतमेहनः ॥

अत्रिः–शुद्ध्यर्थं च त्रिभिः काष्ठैस्तृणैर्वाऽपि निकर्षयेत् ।[1]
यस्मिन्देशे च यत्तोयं या च यत्र च मृत्तिका ॥
सैव तत्र प्रशस्ता स्यात्तया शौचं विधीयते ।

विष्णुपुराणे–वल्मीकमूषकोत्खातां मृदं चान्तर्जलात्तथा ।
शौचावशिष्टां गेहाच्च मृदं शौचे विवर्जयेत् ॥

विष्णुः–अन्तःप्राण्यवपन्नां[2] च हलोत्खातां च नाऽऽहरेत् ।

मनुः–आहृतामन्यशौचार्थं वालुकां पांशुरूपिणीम् ॥
न मार्गान्न श्मशानाच्च नाऽऽदद्यात्कुड्यतः क्वचित् ।

यमः–आहरेन्मृत्तिकां प्राज्ञः कूलादसिकता तु या ॥

कूलग्रहणमुपलक्षणम् । शुचिदेशात्तु संग्राह्या शर्कराश्मादिवर्जितेति शातातपवचनात् । कपिलः–चतुरङ्गुलमृत्तिकाखननपरिग्रहे न दोष इति।

यमः–उभे मूत्रपुरीषे तु पूर्वं गृह्णीत मृत्तिकाम् ।
पश्चाद्गृह्णाति यो विप्रः सचैलो जलमाविशेत् ॥
तीर्थे शौचं न कुर्वीत कुर्वीतोद्धृतवारिणा ।

पैठीनसिः–अनुदकमूत्रपुरीषकरणे सचैलं स्नानमिति[3] ।

उदकपात्राभावे तीर्थेऽपि शौचमुक्तमादित्यपुराणे–
रत्निमात्रं जलं त्यक्त्वा कुर्याच्छौचमनुद्धृतैः ।
पश्चात्तु शोधयेत्तीर्थमन्यथा त्वशुचिर्भवेत् ॥

मनुः–यावन्नापैत्यमेध्याक्तो गन्धलेपश्च तत्कृतः ।
तावन्मृद्वारि देयं स्यात्सर्वासु द्रव्यशुद्धिषु ॥

उद्धृताभ्यां मृज्जलाभ्यां गन्धलेपक्षयकरं शौचं विधायादृष्टार्थं संख्यापूरणं च कुर्यात् ।

१ क. ख. निघर्ष॰ । २ घ. ॰ण्यङ्गदपन्नां ह॰ । ३ ख. ॰णे अर॰ ।

शातातपः—एका लिङ्गे करे सव्ये तिस्रो द्वे हस्तयोर्द्वयोः ।
मूत्रशौचं समाख्यातं शुक्रे तद्द्विगुणं स्मृतम् ॥
[ * अत्र पादयोः सकृन्मृत्तिकेत्यपि बोध्यम् । ]

दक्षः—लिङ्गे तु मृत्समाख्याता त्रिपर्वं पूर्यते यथा ॥
दातव्यमुदकं तावन्मृदभावो यथा भवेत् ।
एका लिङ्गे तिस्रो वाम उभयोर्द्वे तु मृत्तिके ॥
पश्चापाने दशैकस्मिन्नुभयोः सप्त मृत्तिकाः ।
एतच्छौचं गृहस्थस्य द्विगुणं ब्रह्मचारिणः ॥
वानप्रस्थस्य त्रिगुणं यतीनां च चतुर्गुणम् ।
अर्धप्रसृतिमात्रा च प्रथमा मृत्तिका स्मृता ॥
द्वितीया च तृतीया च तदर्धार्धा प्रकीर्तिता ।
वामे करे मृदादेया अर्धामलकसंमिता ॥
उभयोर्हस्तयोर्देया पादामलकसंनिभा ।

मनुः—एका लिङ्गे गुदे तिस्रस्तथैकत्र करे दश ॥
उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता ।
एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ॥
त्रिगुणं तु वनस्थानां यतीनां च चतुर्गुणम् ।
[ + अत्र पादयोस्तिस्रो मृत्तिका इत्यपि बोध्यम् । ]

अत्र वसिष्ठेन शौचमुक्तं वेदितव्यम् । ततश्चाऽऽश्रमभेदेन द्वैगुण्याद्यभिधानं तद्विषयमेव । एतदिति सर्वनाम्ना प्रकृतस्यैव परामर्शात् ।

द्वैगुण्यादि च संख्यापेक्षं न परिमाणापेक्षं तस्या एव प्रकृतत्वात् । पादशौचे चैकैव मृत् । एकैव पादयोर्देयेति ब्रह्मपुराणवचनात् । यत्त्वत्र हारीतवचनं तिसृभिः पादौ प्रक्षालयेदिति तल्लेपशङ्कायामिति वेदितव्यम् । पश्चापाने दशैकस्मिन्नित्यादिसंख्याविशेषपक्षौ शक्त्यपेक्षया विकल्पितौ विज्ञेयौ ।

मूत्रशौचं पुरस्कृत्य बृहच्छौचं समाचरेत् ।
पश्चाच्च पादशौचं तु शौचविद्भिरुदाहृतम् ॥

---

* धनुश्चिह्नान्तर्गता ग्रन्थो घ. पुस्तके वर्तते । + धनुश्चिह्नान्तर्गतो ग्रन्थः क. ख. ग. पुस्तकेषु नास्ति ।

१ घ. संज्ञिता । म° ।

शौचे यत्नः सदा कार्यः शौचमूलो द्विजः स्मृतः ।
शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः ॥
न्यूनाधिकं न कर्तव्यं शौचशुद्धिमभीप्सता ।

दक्षः—यद्दिवा विहितं शौचं तदर्धं निशि कीर्तितम् ।
तदर्धमातुरे प्रोक्तमातुरस्यार्धमध्वनि * ॥

देवलः—धर्म्यं वै दक्षिणं हस्तमधः शौचे न योजयेत् ।
तथैव वामहस्तेन नाभेरूर्ध्वं न शोधयेत्+ ॥

[ × अयं च नियमः स्वस्थे कारणादुभयक्रिया । इति ।

कारणाद्ध्वस्तरोगादिनिमित्तात् । उभयक्रिया । एकेनैव हस्तेनोभयसाध्यक्रिया कर्तव्येत्यर्थः ]

ततो मूत्रपुरीषस्य स्पर्शशङ्कापनोदाय कटिशौचं कुर्यात् । तत्र विष्णुः—'नाभेरधस्ताद्बाहुषु च कायिकैर्मलैः सुरादिभिर्मद्यैर्वोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्याऽऽचान्तः शुध्येत्' इति । ततो धौतं कौपीनं परिधाय द्वादशगण्डूषपूर्वकमाचम्य षट् प्राणायामान्कुर्यात् ।

तथा च संप्रदायविद्वचनम्—

वसित्वा धौतकौपीनं गण्डूषान्द्वादशाऽऽचरेत् ।
आचम्य प्रयतो भूत्वा प्राणायामान्षडाचरेत् ॥

केवले तु लघुशौचे विशेषः—

षट् गण्डूषांस्ततः कृत्वा प्राणायामत्रयं चरेदिति ।

अथ दन्तधावनविधिः ।

वृद्धशातातपः—मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः ।
तस्मात्सर्वप्रयत्नेन भक्षयेद्दन्तधावनम् ॥

अप्रयतोऽशुचिः । भक्षयेदिति दन्तसंबन्धादुपचारेण दन्तान्घर्षयेदित्यर्थः । अन्ये तु भक्षयेच्चर्वयेन्मुख्यार्थे बाधकाभावात् । भक्षणं च दन्तकाष्ठाग्रस्य प्रशिथिलावयवतापादनपर्यन्तं न तु निगरणम् । तथा च विष्णुः—

---

* घ. पुस्तके समासे—चौरव्याघ्रादि संकुले पथि । + प्रकृतिस्थितिरेषा स्यात्कारणादुभयक्रिया । दन्तधावानमृच्छौचे जपे भिक्षान्त एव च । निद्रादौ पृष्ठके च प्राणायामोऽन्यदाचरेणाकार । इत्ययं ग्रन्थः शोधयेदित्युत्तरं ख. पुस्तके । × धनुश्चिह्नान्तर्गतग्रन्थो घ. पस्तके वर्तते ।

१ घ. धर्मविद्दक्षि ।

कनिष्ठाग्रसमस्थौल्यं सकूर्चं द्वादशाङ्गुलम् ।
प्रातर्भुक्त्वा च यतवाग्भक्षयेद्दन्तधावनम् ॥

सकूर्चं चूर्णिताग्रं यथा भवति तथा भक्षयेदित्यर्थः । एतद्दन्तधावनं ःसंध्यायाः प्राक् ।

उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः ।
परिजप्य च मन्त्रेण भक्षयेद्दन्तधावनम् ॥

नारदः—खदिरश्च करञ्जश्च करवीरकदम्बकौ ।
सर्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः ॥
जम्बूनिम्बकचूताश्च कदम्बो लोध्रचम्पकौ ।
बदरी[1] तिंदुकस्त्वेते प्रशस्ता दन्तधावने ॥
कोविदारः करञ्जश्च[2] कूटजः प्लक्षमालती ।
सालोऽङ्कोलः प्रियङ्गुश्च तमालः शाक एव च ॥
आम्रातकोऽरिमेदश्च प्रशस्ता*ऽन्येऽपि ये द्रुमाः ।
वर्ज्यानि शाल्मलीपीलुभव्य[3]किंशुकतिन्दुकाः ॥
अरिष्टोऽक्षः पारिभद्रो गुग्गुलस्तिन्तिडी तथा । इति ।

विहितानामलाभेऽनिषिद्धा एव ग्राह्या न तु निषिद्धाः ।

परिमाणमुक्तं नृसिंहपुराणे—

अष्टाङ्गुलप्रमाणेन तत्प्रमाणमिहोच्यते ।
प्रादेशमात्रमथ वा तेन दन्तान्विशोधयेत् ॥

विष्णुः—द्वादशाङ्गुलकं विप्रैः काष्ठमाहुर्मनीषिणः ।
क्षत्रविट्शूद्रजातीनां नवषट्चतुरङ्गुलम् ॥
कण्टकिक्षीरवृक्षोत्थं द्वादशाङ्गुलमव्रणम् ।
कनिष्ठिकाग्रवत्स्थूलं कूर्चाग्रं सत्वैक[4]पर्वकम् ॥

दन्तधावनं चाग्रेणैव कर्तव्यम् ।

१ सत्वचं दन्तकाष्ठं स्यात्तदग्रेण प्रधावयेत् । इति वचनात् ।

परिजप्य च मन्त्रेणेत्युक्तत्वात्—

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।
ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥

* अत्र संधिरार्षः ।

१ क. °री कन्दुक° । २ ग. कदम्बश्च । ३ ख. भव किं° । ४ ख. °त्वपर्व° ।

इत्यनेन वा प्रणवेन वा काष्ठमभिमन्त्र्य दन्तधावनं कुर्यात् ।

प्राङ्मुखश्चोपविष्टस्तु भक्षयेद्वाग्यतो नरः ।
प्रक्षाल्य च शुचौ देशे दन्तधावनमुत्सृजेत् ॥
प्रक्षाल्य भक्षयेत्पूर्वं प्रक्षाल्यैव च संत्यजेत् ।

अमां वर्जयित्वा दन्तधावनं सदा कार्यम्—

अमावास्यामृते प्रातर्भक्षयेद्दन्तधावनम् ।
अमावास्यां तु नाश्नीयाद्दन्तकाष्ठं कथंचन ॥

नृसिंहपुराणे—अलाभे दन्तकाष्ठस्य प्रतिषिद्धे तथा दिने ।
अपां द्वादशगण्डूषैर्मुखशुद्धिर्भविष्यति ॥

प्रतिषिद्धे दिने श्राद्धादित्यवासरादौ भस्मना दन्ताञ्जिह्वां संशोध्य द्वादश गण्डूषान्कुर्यादित्यर्थः । लोष्टादिना तु न शोधयेत तथा च वृद्धयाज्ञवल्क्यः—

इष्टकालोष्टपाषाणैर्नखैरङ्गुलिभिस्तथा ।
मुक्त्वा[1] चानामिकाङ्गुष्ठौ वर्जयेद्दन्तधावनम् ॥

यमः—मध्याह्नस्नानवेलायां यो भक्षेद्दन्तधावनम् ।
निराशास्तस्य गच्छन्ति देवताः पितृभिः सह ॥

एवं दन्तधावनं विधाय द्वादशभिर्गण्डूषैर्मुखं संशोधयेत् । दशद्वादः गण्डूषैरद्भिः संशोधयेन्मुखम् । इति वचनात् । ततो भस्मस्नानं कृत वासुदेवं विचिन्तयेत् । उक्तं च शिवगीतासु—

मदात्मा मन्मयो भस्म गृहीत्वा ह्यग्निहोत्रजम् ।
तेनोद्धूल्य तु सर्वाङ्गमग्निरित्यादिमन्त्रतः ॥
चिन्तयेत्स्वात्मनीशानं परं ज्योतिःस्वरूपिणम् ।
एष पाशुपतो योगः पशुपाशविमुक्तये ॥

अग्निरिति भस्म । वायुरिति भस्म । जलमिति भस्म । स्थलमि भस्म । व्योमेति भस्म । सर्वꣳ ह वा इदं भस्म । मन एतानि चक्षूꣳ भस्मानीत्यभिमन्त्र्य प्रणवेन सर्वाङ्गेषु निक्षिपेत् । तत्राऽऽरुणी श्रुति "त्रिसंध्यादौ स्नानमाचरेत् । संधिं समाधावात्मन्याचरेत्" [ख०२] इति

व्यासः—प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः ।
भिक्षूणां तु त्रिषवणमेकं तु ब्रह्मचारिणाम् ॥

१ घ. क्त्वा च मध्यमाङ्गु° ।

सर्वे वाऽपि सकृत्कुर्युरशक्तौ चोदकं विना ।
अशिरस्कं भवेत्स्नानमशक्तौ कर्मणां सदा ॥
आर्द्रेण वाससा वाऽपि पाणिना वाऽपि मार्जनम् ।
चतस्रो घटिकाः प्रातररुणोदय उच्यते ॥
यतीनां स्नानकालोऽयं गङ्गाम्बुसदृशः स्मृतः ।
उषस्युषसि यत्स्नानं संध्यायामुदिते रवौ ॥
प्राजापत्येन तत्तुल्यं सर्वपापप्रणाशनम् ।

ब्रह्माण्डपुराणे—पृथिव्यां यानि तीर्थानि तेषां स्नानस्य यत्फलम् ।
विष्णोः पादोदकं मूर्ध्ना दधत्सर्वमवाप्नुयात् ॥

स्कन्दपुराणे—अयमेव परो धर्मस्त्विदमेव परं तपः ।
इदमेव परं तीर्थं विष्णुपादाम्बु यः पिबेत् ॥
स चैवावभृथस्नातः स च गङ्गाजलाप्लुतः ।
विष्णुपादोदकं कृत्वा शङ्खे यः स्नाति मानवः ॥
यतिपादोदकं राजन्हन्ति पापं पुराकृतम् ।
सप्तजन्मार्जितं सद्यः श्रद्धया शिरसा धृतम् ॥

बौधायनः—संध्यासु स्वमात्मानं प्रज्ञया च संधत्ते । यश्चिन्तयते वाऽयमभिवर्धयते तस्माद्ध्यानमेव संध्योपासनमिति ।

प्रातर्मध्यंदिने काले स्नानं विधिवदाचरेत् ।
शौचमाचमनं चैव संध्याध्यानमतन्द्रितः ॥
उत्थायापररात्रे तु विण्मूत्रे विधिनोत्सृजेत् ।
शौचं कृत्वा य आचम्य तदा स्तोत्रादिकं जपेत् ॥
शयनादुत्थितो यस्तु कीर्तयेन्मधुसूदनम् ।
कीर्तनात्तस्य पापानि शममायान्त्यशेषतः ॥

अथ दण्डं मुद्रासहितं गृहीत्वा स्नानार्थं गच्छेत् । तथा च संप्रदायविदः—

नागमुद्रा त्वधो धार्या धेनुमुद्रा तु मध्यतः ।
तृतीये दण्डभागे तु धार्या परशुमुद्रिका ॥
तस्या उपरि संधार्या शङ्खमुद्रा तु वैष्णवी ।

*धेनुमुद्रायां विशेष उक्तः—

* घ. पुस्तके समासे—ब्रह्ममुद्रायामिति केचिदित्युक्तम् ।

* भागद्वयं विहायोर्ध्वं+ चतुरङ्गुलमानतः ।
दण्डं कार्पाससूत्रेण वेष्टयेत्संप्रदायतः† ॥ इति ।

तत एवंविधं दण्डं दक्षिणकरे गृहीत्वा वामांसे वस्त्रं कृत्वा गुरोर्दक्षिणभागे स्थित्वा गुरुमभिवन्द्य तदनुज्ञां प्राप्य गच्छेत्◡ । उक्तं च—

अभिवन्द्य गुरूञ्ज्येष्ठान्देवादीन्परिगृह्य च ।
द्वाराद्बहिर्वामपा[1]दो दण्डमूलं पुरो दधत् ॥
ततो निर्गत्य विप्रादीन्दृष्ट्वा दक्षिणतो व्रजेत् ।
ततो जलाशयं गत्वा गुरूञ्ज्येष्ठान्विलोक्य च ॥
तेषामधःप्रदेशे तु शुचौ देशे कमण्डलुम् ।
संस्थाप्य वामवस्त्रं च कृत्वा विष्णुं स्मरेज्जले ॥
ततो दण्डस्य मूलेन तथाऽग्रेण स्पृशेज्जलम् ।
कुर्याज्जलस्य च दिशां देवानां वन्दनं क्रमात् ॥
ततो गुरूणां ज्येष्ठानां यतीनां वन्दनं क्रमात् ।
ततः संस्थापयेद्दण्डमू[2]र्ध्वाग्रं जलमध्यतः ॥
अथ वा शुचिवस्त्रादौ स्थापयेत्प्रागुदङ्मुखम् ।
ततो मृदं समानीय यथोक्तां शुचिदेशतः ॥
प्रक्षाल्य तीरे संस्थाप्य कुर्याद्भागत्रयं ततः ।
तत एकेन भागेन पादशौचं समाचरेत् ॥
आचम्यान्येन भागेन कटिशौचं समाचरेत् ।
जलान्तस्तिसृभिर्मृद्भिः कटिं प्रक्षालयेत्ततः ॥
कौपीने तिसृभिर्मृद्भिः पुटे प्रत्येकमेव तु ।
गृहस्थस्य च यच्छौचं तत्कार्यं यतिना ततः ॥
आचम्य विधिना पश्चात्प्राणायामत्रयं चरेत् ।
ततस्तु क्षालयेत्सम्यङ्मृज्जलाभ्यां कमण्डलुम् ॥
वामहस्तस्य पृष्ठे तु संस्थाप्य स्नानमृत्तिकाम् ।

* घ. पुस्तके समासे—भागद्वयं मध्यमभागस्य भागद्वयम् । + घ. पुस्तके समासे—ऊर्ध्वं मध्यमभागस्य तृतीयभाग इत्यर्थः । † घ. पुस्तके तु—संप्रदायत इतीत्यस्यानन्तरम् " द्विर्यज्ञोपवीतं च ग्रन्थिमध्ये तु कारयेत् । षडङ्गुलप्रमाणं वै बन्धयित्वा तु यत्नतः । श्वेतसूत्रं भवेद्यत्र ब्रह्ममुद्रा प्रकीर्तिता " इति वर्तते । ◡गच्छेदित्युत्तरं ख. पुस्तके—मृदा स्नानं न कुर्वीत निशि संध्यागृहेषु च । नैमित्तिके तथा स्नाने तथा भौमार्कवारयोः । इति ।

१ क. ख. °पाददण्डमूले पु°। २ क. ख. मूलाग्रं ।

दण्डं कमण्डलुं चैव स्पृष्ट्वाऽऽचामेद्यथाविधि ॥
वामवस्त्रं ततो दण्डे स्थाप्यं यद्वा शुचिस्थले ।
दक्षिणांशौ स्नानमृदं संस्थाप्य विभजेत्त्रिधा ॥
चुलुके जलमादाय तद्वामेन पिधाय च ।
प्रणवेन द्विषड्वारमभिमन्त्र्य च तेन ताम् ॥
संप्रोक्ष्य प्रणवेनैव द्विषट्केनाभिमन्त्रयेत् ।
ततः प्रथमभागात्तु गृहीत्वा स्वाल्पिकां मृदम् ॥
करावालिप्य सूर्याय प्रदर्श्य क्षालयेत्करौ ।
पुनः किंचित्समादाय हस्तयोरुपलिप्य च ॥
सूर्याय दर्शयित्वोर्ध्वमुखं कक्षौ विलेपयेत् ।
जलेनाधोमुखं कक्षौ समालिप्य जलं स्पृशेत् ॥
एवं वारत्रयं कुर्यात्कक्षयोरुपलेपनम् ।
द्वितीयात्किंचिदादाय हस्तयोरुपलिप्य च ॥
सूर्याय दर्शयित्वा तु लिम्पेद्भालभुजौ हृदम् ।
जलं स्पृशेत्ततश्चैव किंचिदादाय मृत्तिकाम् ॥
हृदयमारभ्य चाऽऽ नाभेरालिप्य सलिलं स्पृशेत् ।
पुनश्चैव समादाय पृष्ठमारभ्य लेपयेत् ॥
आपादात्तु जलं स्पृष्ट्वा दक्षिणेन करेण तु ।
तृतीयं भागमादाय वामेनोरू विशोधयेत् ॥
गङ्गायां तन्मुखोऽन्यत्र सूर्यदेवादिसंमुखः ।
यस्य प्रसादादित्यादिमन्त्रेण त्रिर्नमेद्गुरुम् ॥
ततो दक्षिणभागे तु स्थित्वा वन्देत तं गुरुम् ।
ज्येष्ठानां वन्दनं कृत्वा ज्येष्ठानुक्रमतः पुनः ॥
ततस्तान्दक्षिणे कृत्वा वामहस्तेन दक्षिणम् ।
पादं स्पृष्ट्वा विशेत्तोयं नाभिदघ्नं शनैः शनैः ॥
प्रवाहाभिमुखो नद्यामन्यत्र रविसंमुखः ।
त्रिर्निमज्य मृदं स्कन्धे संस्थाप्य प्रागुदङ्मुखः ॥
उ९ आचम्य द्विस्त्रिराचम्य प्रणवैः[1] प्रोक्ष्य मन्त्र्य च ।
मृत्तिकां पूर्ववत्तां च स्कन्धादादाय हस्तयोः ॥
२. उपलिप्याथ सूर्याय चक्षुषोर्वा प्रदर्शयेत् ।

१ ख. °णवेनाभिम° ।

ललाटबाहुहृदयं क्रमेणैव विलेपयेत् ॥
एवं वारत्रयं कृत्वा गृहीत्वा शेषमृत्तिकाम् ।
प्रणवेनाप आलोड्य कुर्यात्षड्वारमज्जनम् ॥
द्विराचम्य त्रिराचम्य प्राणान्पश्चाद्यथाविधि ।
न्यासादि कृत्वा प्रणवं जपेदष्टोत्तरं शतम् ॥
अथ वाऽपि यथाशक्ति ततो ब्रह्मानुचिन्तयेत् ।
नाम्नां तु केशवादीनामेकैकं नाम संस्मरेत् ॥
उक्त्वा द्वादशवारं तु शिरोवदनबाहुषु ।
हृदये च निषिञ्चेत्तु त्रिस्त्रिः[1] शङ्खाख्यमुद्रया ॥
जलेन तिलकं कृत्वा द्विराचमनपूर्वकम्[2] ।
ततस्तु तर्पणं कुर्याद्गत्वा गुरुसमीपतः ॥
तेषां पादोदकं सिञ्चेच्छिरस्यादौ तु पूर्ववत् ।
ततस्तु त्रिः पिबेदेवं विष्णोः पादोदकेन च ॥
ततः प्रक्षाल्य कौपीनं निष्पीड्य परिधाय च ।
ऊरू प्रक्षाल्य मृत्तोयैर्हस्तौ प्रक्षालयेन्मृदा ॥
एकं पादं स्थले कृत्वा द्विराचम्य यथाविधि ।
प्राणायामत्रयं कृत्वा द्विषड्वाराभिमन्त्रितैः ॥
जलैः संप्रोक्ष्य वस्त्रादीनङ्गं वस्त्रेण मार्जयेत् ।
ज्येष्ठानां संनिधौ विद्वानुपविश्य[3] तु मार्जनम् ॥
कण्ठादूर्ध्वं यतिः कुर्यादितरत्र यथासुखम् ।
मुखं त्वष्टगुणेनाऽऽदौ प्रादक्षिण्येन मार्जयेत् ॥
शिरश्चतुर्गुणेनैवमा नाभेर्द्विगुणेन तु ।
एवमेकगुणेनैव पादपर्यन्तमार्जनम् ॥
कौपीनसहितं दोरमादौ बध्नीत वाग्यतः ।
कौपीनमङ्गवस्त्रं च जले[4] चाऽऽप्लुत्य निक्षिपेत् ॥
वामवस्त्रं ततः कृत्वा विसृष्टे चाङ्गवस्त्रके ।
कौपीने मृज्जले क्षिप्त्वा पादौ प्रक्षालयेन्मृदा ॥
तत आचम्य विधिवत्प्राणायामान्षडाचरेत् ।
अज्ञानकृतहिंसादिप्रत्यवायनिवृत्तये ॥ नशि स०
अथोर्ध्वपुण्ड्रं तर्जन्या कुर्यात्स्थानत्रये यतिः ।

१ ख. त्रिभिः श॰ । २ क. मू । °कुर्यात्प्रणामं विधिव° । ख. मू । कुर्य
३ घ. °विश्याङ्गमा° । ४ क. ग. °ले चोत्प्लुत्य ।

प्रथमं धारयेन्मूर्ध्नि प्रणवस्याऽऽद्यमात्रया ॥
द्वितीयया ललाटे तु हृदये च तृतीयया ।
प्राणायामत्रयं कृत्वा ऋष्यादिन्यासपूर्वकम् ॥
प्रणवार्थानुसंधानं पञ्चीकरणपूर्वकम् ।
संध्यां तु विधिवत्कुर्यात्किंचित्कालं समाहितः ॥
अष्टोत्तरशतं वाऽपि सहस्रं वाऽष्टसंयुतम् ।
प्रणवं तु जपेत्पश्चात्प्राणायामत्रयं चरेत् ॥
ततो न्यासं विधायाप्सु पद्ममष्टदलं लिखेत् ।
संचिन्त्य सगुणं विष्णुं तत्र पञ्चोपचारतः ॥
संपूज्य तर्पयेत्तत्र तारेणाष्टोत्तरं शतम् ।
ततो दक्षिणहस्तस्थं तोयं द्वादशवारतः ॥
अभिमन्त्र्य शिरः प्रोक्ष्य तथाऽन्यदभिमन्त्रितम् ।
जलं पिबेदथाऽऽचम्य दोरं प्रक्षालयेन्मृदा ॥
कर्णयोस्तं च संस्थाप्य कौपीनं क्षालयेन्मृदा ।
अङ्गवस्त्रं च घटिकां तयोः कृत्वा यथाविधि ॥
वामहस्तस्य पृष्ठे तु संस्थाप्याऽऽचमनं चरेत् ।
आर्द्रमुद्रां ततो बद्ध्वा दण्डं मूले तु तर्पयेत् ॥
ततो दण्डस्य * मूले तु प्रणवेनैव तर्पयेत् ।
द्विषड्वारं तथाऽग्रे तु तर्पयित्वा समुत्थितः ॥

अन्ये तु—त्रिस्त्रिवारेण देवर्षीन्दण्डाग्रे त्रिः पितॄंस्ततः ।
तत उत्थाय दण्डस्य मूलाग्राभ्यां स्पृशेज्जलम् ॥
जलदिग्गुरुवृद्धानां वन्दनं च यथाक्रमम् ।
कृत्वाऽभिषेकं देवस्य ततो यायान्मठं प्रति ॥
देवं संस्थाप्य विधिवद्वृर्वादीनभिवादयेत् ।
शोषणायाङ्गवस्त्रादि प्रसार्य च शुचिस्थले ॥
प्रागग्रमुदगग्रं वा दण्डं नभसि धारयेत् ।

ततः पादौ प्रक्षाल्य द्विराचम्य शुचिदेशे विष्णुपूजाप्रणवजपश्रवणादि कुर्यात् । तथा च संप्रदायविदः—

गुरूपदिष्टमार्गेण न्यासध्यानादि वाऽऽचरेत् ।
स्वयं पतिततुलसीपत्राद्यैः स्वाहृतैर्यतिः ॥

* घ. पुस्तके समासे—मूल इति मध्यस्याप्युपलक्षणम् ।

गन्धपुष्पाद्युपचारान्कृत्वा सुस्थित[1] आसने ।
जपमालां गृहीत्वा तु प्रणवार्थमनुस्मरन् ॥
जपेद्द्वादशसाहस्रं प्रणवस्य प्रयत्नतः ।
सहस्रं श्रवणार्थी तु योगाभ्यासी शतं जपेत् ॥
निर्विकल्पसमाधिस्तु न जपेत्किंचिदद्द्वयात् ।

[ *अथ जपनिवेदनमन्त्रः-

ॐ पुण्डरीकाक्ष विश्वात्मन्मन्त्रमूर्ते जनार्दन ।
गृहाणेमं जपं नाथ मम दीनस्य शाश्वत ॥

इत्यनेन जपं निवेदयेत् ]

नारदवचनम्—भिक्षाटनं जपो ध्यानं स्नानं शौचं सुरार्चनम् ।
कर्तव्यानि षडेतानि यतीनां नृपदण्डवत् ॥

सुरार्चनमित्यनेन विष्णोः +शिवस्यार्चनमुच्यते । तयोरेव ज्ञानमोक्षप्रदातृत्वात् । तथा च शौनकः-

आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात् ।
ज्ञानं महेश्वरादिच्छेन्मोक्षमिच्छेज्जनार्दनात् ॥
प्रणम्य दण्डवद्भूमौ नमस्कारेण योऽर्चयेत् ।
स यां गतिमवाप्नोति न सा क्रतुशतैरपि ॥

कात्यायनः-त्रिकालमेककालं वा पूजयेत्पुरुषोत्तमम् ।

व्यासः-अन्यैरानीतकुसुमैरर्चयेज्जगदीश्वरम् ।
शूद्रानीतैः क्रयक्रीतैर्नार्चयेद्भक्तिमान्यतिः ॥
पक्कं तु तुलसीपत्रं ◡पुष्पं पर्युषितं च यत् ।
आनीय तत्प्रयत्नेन पूजयेत्पुरुषोत्तमम् ॥
भावपुष्पैर्यजेद्योगी बाह्यैर्वा श्रद्धया शिवम् ।
तदर्थं पुष्पहिंसायां ⊙न भवेद्धिंसकः[2] क्वचित् ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तके वर्तते । + घ. पुस्तके समासे—शिवपदं बाणलिङ्गपरम् । ◡ घ. पुस्तके समासे-पुष्पं पर्युषितामिति मुनिपुष्पादिविषयम् । तुलस्यगस्त्य बिल्वानि गङ्गावारि न दुष्यतीत्यादिवाक्येन तेषां पर्युषितत्वाभावप्रतिपादनात् । ⊙ घ. पुस्तके समासे—न भवेद्धिंसकः क्वचिदित्यनेन देवार्थे तुलसीपुष्पादिच्छेदेऽपि यतेर्दोषो नास्तीति प्रतिपादितं भवति ।

---

१ क. ग. घ. °स्थिर आ° । २ ख. °सको यातिः । वि° ।

विष्णोः पादोदकं जुष्टं *नैवेद्यस्य च भक्षणम् ।
निर्माल्यं शिरसा धार्यं महापातकनाशनम् ।
यदि वाग्यमलोपः स्याज्जपादिषु कथंचन ॥
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ।
कृष्णालयसमीपस्थान्कृष्णदर्शनलालसान्+ ॥
चाण्डालान्पतितान्व्रात्यान्स्पृष्ट्वा[1] न स्नानमाचरेत् ।
पाद्मे—यः पूजयेद्धरिं चक्रे शालग्रामसमुद्भवे ।
राजसूयसहस्रेण तेनेष्टं प्रतिवासरम् ॥
महाकाष्ठस्थितो वह्निर्मन्थस्थाने प्रकाशते ।
यथा तथा हरिर्व्यापी शालग्रामे प्रकाशते ॥
विना तीर्थैर्विना दानैर्विना यज्ञैर्विना म[2]खैः ।
मुक्तिं याति नरोऽवश्यं शालग्रामशिलार्चनात् ॥
शालग्रामसमीपे तु क्रोशमात्रं समन्ततः ।
कैकटेऽपि मृतो याति वैकुण्ठभवनं नरः ॥
कपिलः—प्रातःस्नाने त्वशक्तश्चेत्कापिलं स्नानमाचरेत् ।
तत्राप्यसामर्थ्ययुक्ते मन्त्रस्नानं विधीयते ॥
नाभेरधः प्रविश्याप्सु कटिं प्रक्षाल्य मृज्जलैः ।
जलार्द्रकर्पटेनाङ्गशोधनं कापिलं स्मृतम् ॥
सायंप्रातरसामर्थ्ये सायमेवाथवा पुनः ।
परिवर्त्य च कौपीनं मन्त्रस्नानं विधीयते ॥
पाराशरः—चक्षूरोगी शिरोरोगी कण्ठरोगी कफाधिकः ।
कण्ठस्नानं प्रकुर्वीत शिरःस्नानफलं लभेत् ॥
कालदोषादिसामर्थ्यान्न शक्नोति यदा ह्यसौ ।
ऋषिभिस्तु तदा ज्ञात्वा मन्त्रैर्दिष्टं तु मार्जनम् ॥
आग्नेयं भस्मना स्नानमवगाह्य च वारुणम् ।
आपो हि ष्ठेति ब्राह्मं च वायव्यं रजसा गवाम् ॥
यत्तु सातपवर्षं हि तत्स्नानं दिव्यमुच्यते ।
स्नानान्येतानि चाऽऽपत्सु व्याधितस्योदकं विना ॥

* घ. पुस्तके समासे-विष्णुनैवेद्यभक्षणं चान्यसमर्पितनैवेद्यभक्षणविषयम् । + घ. पुस्तके समासे—°ष्णुसेवार्थमागतानिति वा पाठ इत्युक्तम् ।

१ ख. °ष्ट्वा स्नानं समा° । २ क. मतिम् । मु° ।

*स्नानेऽप्यशक्तः स्नायीत नित्यमुष्णेन वारिणा ।
तैलाभ्यङ्गो न दुष्येत व्रणिनां वातरोगिणाम् ॥

अत्रिः—स्नानं त्रिषवणं प्रोक्तं नियमाः स्युस्त्रिदण्डिनाम् ।
नैतत्परमहंसानां मुक्तानामात्मदर्शिनाम् ॥

मेधातिथिः—स्नानं त्रिषवणं प्रोक्तं बह्वूदकवनस्थयोः ।
हंसे तु सकृदेव स्यात्परहंसे न विद्यते ॥

अथाऽऽचमनविधिस्तत्र दक्षः—

प्रक्षाल्य पादौ हस्तौ च त्रिः पिबेदम्बु वीक्षितम् ।
संमृज्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखम् ॥
+ संहताङ्गुलिभिः पूर्वमास्यमेवमुपस्पृशेत् ।
अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम् ॥
अङ्गुष्ठानामिकाभ्यां तु चक्षुः श्रोत्रं पुनः पुनः ।
गोकर्णाकृतिहस्तेन माषमात्रं जलं पिबेत् ॥
तन्न्यूनं तु सुरापानमधिकं रुधिरं भवेत् ।
कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयं तु तलेन वै ॥
सर्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् ।

शङ्खः—प्रक्षाल्य पादौ हस्तौ च संस्थाप्य चरणौ भुवि ।
संनिबद्धककच्छाशिखः स्मृत्वा चैवेष्टदेवताम् ॥
दक्षिणं तु करं कृत्वा गोकर्णाकृतिवत्पुनः ।
माषमज्जनमात्रास्तु संगृह्य त्रिः पिबेदपः ॥
ब्रह्मतीर्थेन दैवेन न पित्र्येण कदाचन ।
पीत्वा तु हस्तौ प्रक्षाल्य पादावोष्ठावलोमकौ ॥
वारिणाऽङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखम् ।
तिसृभिर्मध्यमाभिर्वा सर्वाभिर्वारिणा स्पृशेत् ॥
अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम् ।
अङ्गुष्ठानामिकाभ्यां तु चक्षुः श्रोत्रं पुनःपुनः ॥
कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयं तु तलेन वै ।
सर्वाभिश्च शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् ॥

* घ. पुस्तके समासे-शीतोदकस्नाने । + घ. पुस्तके समासे—मध्यमाभिस्तिसृभिरिति ।

अपः स्पृशेत्तु सर्वत्र मध्ये मध्ये[1] विधानतः ।
अशक्तस्त्रिश्चतुर्वाऽपि पीत्वा प्रक्षालयेत्करम् ॥
मुखं प्रमृज्य विधिवन्नाभिं चैव तु संस्पृशेत् ।
यतिश्च ब्रह्मचारी च नाऽऽचामेच्चर्मवारिणा ॥
वानप्रस्थो गृहस्थश्च दैवे पित्र्ये च कर्मणि ।

याज्ञवल्क्यः–अन्तर्जानु शुचौ देश उपविष्ट उदङ्मुखः ।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥

शुचावशुचिद्रव्यासंस्पृष्टे देश इत्युपानच्छत्रशयनासनादिनिषेधः । उपविष्टोऽधःस्थितो[2] न शयानः प्रह्वो गच्छन्वा । उदङ्मुखः प्राङ्मुखो वेति दिगन्तरनिवृत्तिः । शुचौ देश इत्येतस्मात्पादप्रक्षालनप्राप्तिः । ब्राह्मेण तीर्थेन वक्ष्यमाणेन । द्विजो न शूद्रादिः । नित्यं सर्वकालमाश्रमान्तरगतोऽपि । उपस्पृशेदाचामेत् । कथम् । अन्तर्जानु जानुनोर्मध्ये हस्तौ कृत्वा दक्षिणेन हस्तेनेति ।

कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥

कनिष्ठायास्तर्जन्याश्चाङ्गुष्ठस्य च मूलानि करस्याग्रं प्रजापतिपितु- [ ब्रह्म ] देवतीर्थानि यथायथं वेदितव्यानि ।

त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत् ।
अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ॥

वारत्रयमपः पीत्वा मुखमङ्गुष्ठमूलेन द्विरुन्मृज्य खानि च्छिद्राण्यूर्ध्वकायगतानि घ्राणादीन्यद्भिरुपस्पृशेत् । अद्भिर्द्रव्यान्तरासंसृष्टाभिः । पुनरद्भिरितिग्रहणं प्रतिच्छिद्रमुदकस्पर्शनार्थम् । पुनस्ता एव विशिनष्टि– प्रकृतिस्थाभिर्गन्धरूपरसस्पर्शान्तरमप्राप्ताभिः । फेनबुद्बुदरहिताभिः । तुशब्दाद्वर्षधारागतानां शूद्राद्यावर्जितानां च निषेधः ।

हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः ।
शुध्येरन्स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥

यमः–अपः परनखस्पृष्टा यथाऽऽ(द्या)चामति वै द्विजः ।
सुरां पिबति वा रक्तं[3] यमस्य वचनं तथा ॥

१ क. घ. द्विजातयः । अ° । ग. द्विजोत्तमः । अ° । २ ख. ग. घ. °ष्टोऽनास्थि° । ३ क. रक्तां य: ।

उद्धृत्य वामहस्तेन यः पिबेद्ब्राह्मणो जलम् ।
सुरापानेन तत्तुल्यं मनुः स्वायंभुवोऽब्रवीत् ॥
करकालाबुकाष्ठेन ताम्रपर्णपुटेन च * ।
स्वहस्ताचमनं कार्यं स्नेहलेपांश्च वर्जयेत् ॥
अलाबुदारुपर्णेन नारिकेलैः कपित्थकैः ।
तृणकाष्ठजलाधारैरन्यान्तरितमृन्मयैः ॥
वामेनोद्धृत्य वाऽऽचामेदन्यदातुरसंभवे ।

भविष्यपुराणे—सोपानत्को जलस्थो वा मुक्तकेशोऽपि वा द्विजः ।
उष्णीषी वाऽपि नाऽऽचामेद्वस्त्रेणाऽऽच्छाद्य वा शिरः ॥
न गच्छन्न शयानश्च न चलन्न परान्स्पृशन् ।
न हसन्नैव संजल्पन्नाऽऽत्मानं नैव वीक्षयन् ॥
केशान्नीवीमधःकायं स्पृशन्न धरणीमपि ।
यदि स्पृशति चैतानि भूयः प्रक्षालयेत्करम् ॥

गोभिलः—जानुभ्यामूर्ध्वमाचम्य जले तिष्ठन्न दुष्यति ।

पैठीनसिः—अन्तरुदक आचान्तोऽन्तरेव शुद्धो भवति । बहिरुदक आचान्तो बहिरेव शुद्धः स्यात्तस्मादन्तरेकं बहिरेकं पादं कृत्वाऽऽचामेत्सर्वत्र शुद्धो भवति । बौधायनः—पादप्रक्षालनशिष्टेन नाऽऽचामेद्य-द्याचामेद्भूमौ स्रावयित्वा वाऽऽचामेत् । भूमौ स्रावणं वर्ज्योदकमात्रोपलक्षणम् ।

यमः—तावन्नापः स्पृशेद्विप्रो यावद्वामेन संस्पृशेत् ।
वामे हि द्वादशाऽऽदित्या वरुणास्त्रिदशेश्वरः ॥
शौचशेषं पादशेषं पीतशेषं तथैव च ।
मद्यतुल्यं तु तत्तोयं पर्युक्षकरणं विना ॥

आचमननिमित्तानि मनुः—
सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वाऽनृतं वचः ।
पीत्वाऽपोऽध्येष्यमाणश्च आचामेत्प्रयतोऽपि सन् ॥

* ख. पुस्तके ताम्रवर्णपुटेन चेत्युत्तरम्—आसनं शयनं वस्त्रं जायापत्यं कमण्डलुः । आत्मनः शुचिरेतानि परेषामशुचिर्भवेत् । इत्ययं श्लोको वर्तते ।

१ घ. °ञ्चचर्म पु° । २ क. पितृशेषं ।

ब्रह्मपुराणे—अधोवर्णस्य[1] संलापे सुप्ते वा दन्तधावने ।
आचम्य प्रयतो भूत्वा ततः शुद्धो भवेन्नरः ॥
अधोवर्णश्चाण्डालादिः[2] । यमः—
उत्तीर्योदकमाचामेद्देवतीर्थे[3] तथैव च ।
हारीतः—स्त्रीशूद्रोच्छिष्टाभिभाषण आचामेत् ।
मूत्रपुरीषोत्सर्गदर्शने देवताभिगन्तुकाम आचामेत् ।
अथ द्विराचमननिमित्तानि—
याज्ञवल्क्यः—स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे ।
आचान्तः पुनराचामेद्वासोऽपि परिधाय च ॥
यमः—सकर्द्दमे तु वर्षासु प्रविश्य ग्रामसंकटम् ।
जङ्घयोर्मृत्तिकास्तिस्रः पद्भ्यां च द्विगुणाः स्मृताः ॥
एवंविधरथ्योपसर्पण एवंविधप्रक्षालनानन्तरमाचमनम् ।
उदकाभाव आचमनानुकल्पः ।
बृहस्पतिः—पितृमन्त्रोच्चारे[4] रौद्र आत्मालम्भेऽधमेक्षणे ।
अधोवायुसमुत्सर्गे आक्रन्दे क्रोधसंभवे ॥
मार्जारमूषकस्पर्शे प्रहासेऽनृतभाषणे[5] ।
निमित्तेषु च सर्वेषु दक्षिणं श्रवणं स्पृशेत् ॥
आर्द्रं तृणं गोमयं वा भूमिं वा संस्पृशेद्द्विजः ।
क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथाऽनृते ॥
पतितानां च संभाषे दक्षिणं श्रवणं स्पृशेत् ।
मार्कण्डेयपुराणे—कुर्यादाचमनं स्पर्शं गोपृष्ठस्यार्क*दर्शनम् ।
कुर्वीताऽऽलम्भनं वाऽपि दक्षिणश्रवणस्य च ॥
यथाविभवतो ह्येतत्पूर्वाभावे ततः परम् । इति ।
आचमनापवादः—
याज्ञवल्क्यः—मुखजा विप्रुषो मेध्यास्तथाऽऽचमनबिन्दवः ।
श्मश्रु चास्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः ॥

---

* ग. पुस्तके समासे—अर्केति चन्द्रस्याप्युपलक्षणम् ।

---

१ ख. अवर्णस्य च सं° । २ ख. अव° । ३ घ. °मेदवतीर्थे त° । ४ घ. °चारदेश आ°
५ ग. लङ्घे ध° । ६ क. प्रवासे ।

मनुः—दन्तवद्दन्तलग्नेषु जिह्वास्पर्शे शुचिर्न तु ।
परिच्युतेषु च स्थानान्निगिरन्नेव तच्छुचिः ॥

शातातपः—दन्तलग्ने फले मूले अप्सु प्राणाहुतीषु च ।
स्नेहे सोमे चेक्षुदण्डे नैवोच्छिष्टो भवेद्द्विजः ॥
स्पृशन्ति बिन्दवः पादौ यस्याऽऽचामयतः करात् ।
न तैरुच्छिष्टभावः स्यात्तुल्यास्ते भूमिगैः सह ।

अथ प्राणायामः शौनकपरिशिष्टे—अथ प्राणायामान्व्याख्यास्यामः
[1]यावत्यः पूरके मात्रा द्विगुणा रेचकेषु च ।
कुम्भके चातुर्गुण्यं च प्राणायामोऽयमुच्यते ॥

अष्टमात्रः पूरकः षोडशमात्रो रेचको द्वात्रिंशन्मात्रः कुम्भक इति शिशुप्राणायामः । द्वादशमात्रः पूरकश्चतुर्विंशतिमात्रो रेचकोऽष्टचत्वारिंशन्मात्रः कुम्भक इति मध्यमः । षोडशमात्रः पूरको द्वात्रिंशन्मात्रो रेचकश्चतुःषष्टिमात्रः कुम्भक इत्युत्तमः । इति प्राणायामः अक्षरकालो मात्रा । प्रायश्चितं चैतत्सर्वेषु दुष्कृतेषु ।
रेचकं दक्षिणे नासे पूरकं वामनासिके ।
अङ्गुष्ठाङ्गुलिभिश्चैवं प्राणायामं समाचरेत् ॥
प्राणायामैकनिष्ठस्य न किंचिदपि दुर्लभम् ।

मार्कण्डेयपुराणे—लघुर्द्वादशमात्रस्तु द्विगुणः स तु मध्यमः ।
त्रिगुणाभिश्च मात्राभि[2]रुत्तमोऽयमुदाहृतः ॥

[3]शक्ताशक्तापेक्षया लघ्वादिव्यवस्था ।

वैवस्वतः—द्वादशावर्तनं यत्तु प्रणवस्य मनो हृदि ।
प्राणायामो यतेः प्रोक्तः प्राणानायम्य चोमिति ॥

कूर्मपुराणे—प्राणस्तु देहजो वायुरायामस्तन्निरोधनम् ।
मात्राद्द्वादशको मन्दश्चतुर्विंशतिमात्रकः ॥
मध्यमः प्राणसंरोधः षट्त्रिंशन्मात्रकोत्तमः ।
सगर्भमाहुः सजपमगर्भं विजपं बुधाः ॥

---

१ क. ख. घ. यावत्यो रेचके मात्रास्तद्द्विगुणाः पूरके विद्यात् । कुम्भके चातुर्गुण्यम् । अष्टमात्रो रेचकः षोडशमात्रः पूरको द्वात्रिंशन्मात्रः कुम्भक इति शिशुप्राणायामः । द्वादशमात्रो रेचकश्चतुर्विंशतिमात्रः पूरकोऽष्टचत्वारिंशन्मात्रः कुम्भक इति मध्यमः । षोडशमात्रो रेचको द्वात्रिंशन्मात्रः पूरकश्चतुः षष्टिमात्रः कुम्भक इत्युत्तमः । इति प्राणायामः । २ क. ख. घ. °रुत्तरीय उदा° । ३ ख. ग. घ. °शक्त्यापे° ।

रेचकः पूरकश्चैव प्राणायामोऽथ कुम्भकः ।
रेचकोऽजस्रनिःश्वासात्पूरकः संनिरोधतः ॥
साम्येन संस्थितिर्या सा कुम्भकः परिगीयते ।

वसिष्ठः—प्रणवेनैव कुर्याच्च प्राणायामान्यतिर्मुहुः ।
सर्वे[1]षामपि पापानां संघाते समुपस्थिते ॥
पूरकः पूरणं वायोः कुम्भकः स्थापनं हृदि ।
बहिर्निःसारणं तस्य रेचकः परिकीर्तितः ॥
अभ्यसेद्दशसाहस्रं प्रणवं शोधनं हि तत् ।
रेचकं वाममार्गेण पूरकं दक्षिणे तथा ॥
कुम्भकं तु तयोर्हीनं मध्यमं हृदि तिष्ठति ।
निरोधाज्जायते वायुर्वायोरग्निर्हि जायते ॥
ताभ्यामापोऽभिजायन्ते ततोऽन्तः शुध्यते त्रिभिः ।
चतुर्विंशतिमावृत्तिं षट्त्रिंशद्द्वादशाथवा ॥
प्रणवस्य स्मरेत्स स्यात्प्राणायामो यतानिलः ।

भिन्नलक्षणप्राणायामविधानं तु यथाधिकारं द्रष्टव्यम् । परमहंसस्य तु प्राणायामः प्रणवयुक्त एव स्यान्नान्यः । कुतः—

प्रणवाभ्यासविक्षेपमानन्दात्मस्थितिप्रियम् ।
यतिं परमहंसाख्यं यस्त्वं नार्चितुमर्हति ॥

तस्य दोषः स्यादिति शेषः ।

वेदो वृक्षस्तस्य मूलं प्रणवो यस्य सोऽस्ति सः ।
वृक्षमूली यतिः स स्यात्त्य[2]क्तवेदपरिग्रहः ॥ इत्यादिस्मृतेः ।

नन्वत ऊर्ध्वममन्त्रवदाचरेदित्यादिश्रुतिवचनविरुद्धमेतत्स्मृतिवचनम् । न विरुद्धं सर्वेषु वेदेष्वारण्यकमावर्तयेदित्यादिवेदवचनेन परमहंसस्याप्यारण्यावृत्तेर्विहितत्वादार[3]ण्यरूपत्वात्प्रणवस्य परमहंसस्य प्रणवावृत्तेर्वेदेन विहितत्वात् ।

मनुः—आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान् ।

वेदाभ्यासः प्रणवाभ्यासः । अत ऊर्ध्वममन्त्रवदाचरेदिति श्रुतिवचनं तु प्रणवव्यतिरिक्तप्रतिषेधार्थमित्यविरोधः ।

---

१ क. ख. °षामेव पा° । २ क. ख. त्यक्तवेदोऽपरिग्रहः । ग. त्यक्त्वा वेदपरिग्रहम् । ३ ग. घ. °ण्यभूतत्वा° ।

दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः ।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥
प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्बिषम् ।
प्रत्याहारेण संसर्गान्ध्यानेनानीश्वरान्गुणान् ॥

अथ जपविधिः ।

योगयाज्ञवल्क्यः—उपांशुजपयोगस्तु तस्माच्छतगुणो भवेत् ।
सहस्रो मानसः प्रोक्तो यस्माद्ध्यानसमो हि सः ॥

तस्माद्वाचिकात् ।

न च क्रामन्न च हसन्न पार्श्वमवलोकयन् ।
नापाश्रितो न जल्पंश्च न प्रावृतशिरास्तथा ॥

कूर्मपुराणे—जपकाले न भाषेत नान्यानि प्रेक्षयेद्बुधः[1] ।
न कम्पयेच्छिरोग्रीवं दन्तान्नैव प्रकाशयेत् ॥

व्यासः—अङ्गुल्यग्रेषु यज्जप्तं यज्जप्तं मेरुलङ्घने ।
असंख्यातं च यज्जप्तं तज्जप्तं निष्फलं भवेत् ॥
अनामिकायां मध्ये च मध्याच्चाधःक्रमेण तु ।
तर्जन्यां[2] विजयान्ते च अक्षमाला करे स्थिता ॥
मध्यमादिद्वयं वर्ज्यं जपकाले विपश्चिता ।
एतन्मेरुं विजानीयाद्दूषितं ब्रह्मणा स्वयम् ॥

शिवपुराणे—अङ्गुल्या जपसंख्यानमेकमेकमुदाहृतम्[3][4] ।
रेषा(ख)याऽष्टगुणं विद्यात्पुत्रजीवैर्दशाधिकम् ॥
शतं स्याच्छङ्खमणिभिः प्रवालैस्तु सहस्रकम् ।
स्फटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते ॥
पद्माक्षैर्दशलक्षं तु सौवर्णैः कोटिरुच्यते ।
कुशग्रन्थ्या च रुद्राक्षैरनन्तगुणितं भवेत् ॥

वाराहपुराणेऽक्षमालायाः परिमाणमुक्तम्—
उत्तमा तु शतं पूर्णं पञ्चाशद्भिस्तु मध्यमा ।
कनिष्ठा पञ्चविंशत्या परिमाणं विधीयते ॥

---

१ क. ख. घ. प्रेषये° । २ क. न्यादिजपान्ते । ३ ग. घ. मेव मु° । ४ ख. मू । रिष्टेनाष्ट° । ग. मू । इष्टयाऽ° ।

बौधायनः—वृक्षमूलिको वेदसंन्यासी । वेदो वृक्षः प्रणवस्तस्य मूलं प्रणवात्मको वेदः प्रणवं ध्यायेत् । प्रणवो ब्रह्मभूयाय कल्पत इति होवाच प्रजापतिरिति ।

वैवस्वतः—पादमाक्रम्य पादेन जपं नैव तु कारयेत् ।
शिरः प्रावृत्य वस्त्रेण ध्यानं नैव प्रशस्यते ॥
व्याहरेदक्षरश्रेण्यां वर्णाद्वर्णं पदात्पदम् ।
शब्दार्थचिन्तनाभ्यासात्स उक्तो मानसो जपः ॥

पाद्मे—परमहंसव्रती[1] यस्तु प्रणवाभ्यासशीलितः[2] ।
यद्यनुत्पन्नविज्ञानो विरक्तः संयतेन्द्रियः ॥
यावज्जीवं जपेन्मन्त्रं प्रणवं ब्रह्मणो वपुः ।
ह्रस्वो दहति पापानि दीर्घो मोक्षप्रदायकः ॥
प्लुतस्तु सर्वसिध्द्यै स्यात्प्रणवस्त्रिविधः स्मृतः ।
अ ऋग्वेद उ यजुर्वेदो मकारः सामसंज्ञकः ॥

काठके—" सर्वे वेदा यत्पदमामनन्ति तपाꣳसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदꣳ संग्रहेण ब्रवीम्योमित्येतत् " [ अ० १ व० २।१५ ]

एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥
यस्तु द्वादशसाहस्रं नित्यं प्रणवमभ्यसेत् ।
तस्य द्वादशभिर्मासैः परं ब्रह्म प्रकाशते ॥

अथ श्रवणविधिस्तत्रेयमितिकर्तव्यता कूर्मपुराणे—
आचम्य संयतो नित्यमधीयीत ह्युदङ्मुखः ।
उपसंगृह्य तत्पादौ वीक्षमाणो गुरोर्मुखम् ॥
मनुः—हस्तौ तु संयतौ कार्यौ जानुभ्यामुपरि स्थितौ ।
संहृत्य[3] हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः ॥
ब्राह्मणः प्रणवं कुर्यादन्ते च वेदविद्द्विजः । इति ।

चकारादादावपि प्रणवं कुर्यादित्यर्थः । स्रवत्यनोंकृतं[4] पूर्वं पुरस्ताच्च विशीर्यत इति वचनाच्च प्रणवमुच्चार्य सुमुखश्चैकदन्तश्चेत्यादिना विघ्न-

१ ख. ग. घ. व्रतिनस्तु । २ ख. शालिनः । ३ ग. घ. संहत्य । ४ क. तं पश्चात्पु° ।

राजं स्मृत्वा शं नो मित्रेत्यादिशान्तिं पठित्वा वेदान्तग्रन्थस्य संध्या-(ध्यां) स्थले पठेत् ।

तथा चोक्तं संप्रदायविद्भिः—

तथोपदिष्टां[1] गुरुणा सह शान्तिं पठेत्ततः ।
*संध्यापत्रं समादाय गुरुवक्त्रं विलोकयन् ॥
स्थित्वा तेनोमिति प्रोक्ते स्वयमप्योमिति ब्रुवन् ।
मन्दस्वरेण संध्यास्थं +वाक्यमेकं पठेत्ततः ॥
गुरुणा तस्य संक्षिप्य तात्पर्ये वर्णिते सति ।

ततो द्वादश दण्डप्रणामान्कुर्यात् । तथा चाऽऽहुः—

वेदान्तशास्त्रस्याऽऽरम्भे प्रणामा द्वादश स्मृताः ।
गुरोर्यथावदन्ते तु षट् प्रणामाः प्रकीर्तिताः ॥

ततो यथाशक्ति पठित्वाऽन्ते पुनः प्रणवं कृत्वा तामेव शान्तिं पठित्वा नमस्कारान्विधाय विरमेत् ।

उक्तं च श्रवणफलम्—

किं तीर्थैः किं प्रदानैर्वा किं यज्ञैः किमुपोषितैः ।
अहन्यहनि तं देवं तन्मयत्वेन शृण्वताम् ॥
अत्राऽऽत्मव्यतिरेकेण द्वितीयं यदि पश्यति ।
ततः शास्त्राण्यधीयन्ते श्रूयन्ते ग्रन्थविस्तराः ॥
श्रवणान्मननाच्चैव निदिध्यासनतस्तथा ।
आराध्यं सर्वदा ब्रह्म पुरुषेण हितैषिणा ॥
यथा खनन्खनित्रेण नरो वार्यधिगच्छति ।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥
गुरुपूजा च सततं वृद्धानां पर्युपासनम् ।
श्रवणं चैव शास्त्राणां कूटस्थं श्रेय उच्यते ॥
आध्यात्मिकीं कथां मुक्त्वा भैक्षचर्यां सुरस्तुतिम् ।
अनुग्रहं पथि प्रश्नं वृथा जल्पोऽन्य उच्यते ॥
ब्रह्मचर्यममानित्वमहिंसा सत्यमार्जवम् ।
वेदान्तश्रवणं ध्यानं भिक्षोः कार्याणि नित्यशः ॥

* घ. पुस्तके समासे-प्रणववार्तिकादि पुस्तकम् । + घ. पुस्तके समासे-पञ्चीकरणादिवाक्यम् ।

१ ग. °दिष्टो गु° ।

त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणाम् ।
श्रुत्याऽभिधीयते यस्मात्तत्त्यागी पतितो भवेत् ॥
शिखासूत्रपरित्यागी वेदान्तश्रवणं विना ।
विद्यमानेऽपि संन्यासे पतत्येव न संशयः ॥
अहं ब्रह्मेतिवाक्यार्थबोधो यावद्दृढं भवेत् ।
शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम् ॥
यावद्देवाऽऽत्मविज्ञानमतदाभासवर्जितम् ।
सुनिश्चलं भवेत्तावच्छ्रवणादिव्रतो भवेत् ॥
त्यक्ताशेषक्रियस्यैव संसारं प्रजिहासतः ।
जिज्ञासोरेव चैकात्म्यं त्रय्यन्तेष्वधिकारिता ॥
शान्तैरनन्यमतिभिर्मधुरस्वभावैरेकत्वनिश्चितमनोभिरपेतमोहैः ।
सार्धं वनेषु परमात्मपदस्वरूपं शास्त्रेषु सम्यगनिशं विमृशन्ति धन्याः ॥
न देशो न च कालोऽस्ति न हिंसा गुरुकर्मणि ॥
सर्वत्रैवानुकूलः स्यादेष धर्मस्य संग्रहः ।
व्यासः—यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ।
याज्ञवल्क्यः—ज्ञेयं चाऽऽरण्यकमहं यदादित्यादवाप्तवान् ॥
योगशास्त्रं च मत्प्रोक्तं ज्ञेयं योगमभीप्सता ।

चित्तवृत्तेर्विषयान्तरतिरस्कारेणाऽऽत्मस्थैर्यं योगः । तत्प्राप्त्यर्थं मया यद्बृहदारण्यकाख्यमादित्यात्प्राप्तं तच्च ज्ञातव्यम् । तथा च यन्मयोक्तं योगशास्त्रं तदपि ज्ञातव्यम् ।

अनन्यविषयं कृत्वा मनोबुद्धिस्मृतीन्द्रियम् ।
ध्येय आत्मा स्थितो योऽसौ हृदये दीपवत्प्रभुः ॥
संवर्तः—योगाभ्यासपरो नित्यमात्मविद्यापरायणः ।
स ह्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव तु ॥
द्रष्टव्यस्त्वथ मन्तव्यः श्रोतव्यश्च द्विजातिभिः ।

द्रष्टव्योऽपरोक्षीकर्तव्य आत्मा । तत्रोपायं दर्शयति—श्रोतव्य इति । प्रथमतो वेदान्तश्रवणेन निर्णेतव्यस्तदनन्तरं मन्तव्यो युक्तिभिर्विचारयितव्यस्ततोऽसौ ध्यानेनापरोक्षी भवति । अमनने दोषमाह तैत्तिरीयश्रुतिः—"तत्त्वेव भयं विदुषो मन्वानस्य" इति [ २।७।१ ] ।

१ ग. घ. त्या विधी । २ ख. लब्धा ।

स्कान्दे-वैष्णवं चरितं पुण्यमायुरारोग्यपुष्टिदम् ।
पठतः शृण्वतो वाऽपि सर्वपापं व्यपोहति ॥

गीतासु-तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः । [अ०४श्लो०३४] ।

व्याससूत्रम्-" आवृत्तिरसकृदुपदेशात् " [ अ०४ पा०१ सू० १ ]।
श्रवणादिक्रिया तावत्कर्तव्येह प्रयत्नतः ।
यावद्यथोक्तविज्ञानमाविर्भवति भास्वरम् ॥

इति सुरेश्वरवचनेभ्यो वेदान्तश्रवणमनननिदिध्यासनानां ब्रह्मसाक्षात्कारोदयपर्यन्तमावृत्तिः कार्या । काठकवचनाच्च-" उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत " [ का० १।३।१४ ] " श्रवणायापि बहुभिर्यो न लभ्यः शृण्वतोऽपि बहवो यं न विद्युः । आश्चर्यो वक्ता कुशलोऽस्य लब्धाऽऽश्चर्यो ज्ञाता कुशलानुशिष्टः "[ का० १।२।७ ]इति । अधिकारिणा क्रियमाणानि श्रवणादीन्यसति प्रतिबन्ध इह जन्मन्येव ब्रह्मसाक्षात्कारं जनयन्ति सति तु प्रतिबन्धके तत्क्षये जन्मान्तरे जनयन्ति। तथा च व्याससूत्रम्—"ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् " [ अ० ३पा० ४ सू० ५१ ] इति । प्रतिबन्धकं च कामकर्मणी । तथा च व्यासः—

काम एव मनुष्याणां पिधानं ब्रह्मबोधने ।
तस्मात्कामं त्यजन्धीरो ज्ञानमाप्नोति मोक्षदम् ॥
ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।
यथाऽऽदर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥

इति श्रवणविधिः ।

ततो मध्याह्ने पूर्वोक्तेन विधिना स्नानध्यानादि विधाय भिक्षाचर्यं चरेत् ।

दत्तात्रेयः-याचितायाचिताभ्यां च भिक्षाभ्यां कल्पयेत्स्थितिम् ।
माधूकरं याचितं स्यात्प्राक्प्रणीतमयाचितम् ॥

प्राक्प्रणीतमित्ययाचितादेरप्युपलक्षणम् ।
माधूकरमथैकान्नं परहंसः समाचरेत् ।

उशना-माधूकरमसंक्लप्तं प्राक्प्रणीतमयाचितम् ।
तात्कालिकं चोपपन्नं भैक्षं पञ्चविधं स्मृतम् ॥
मनःसंकल्परहितान्गृहांस्त्रीन्पञ्च सप्त वा ।
मधुवदाहरणं यत्तन्माधूकरमिति स्मृतम् ॥

शयनोत्थापनात्प्राक्च प्रार्थितं भक्तिसंयुतैः ।
तत्प्राक्प्रणीतमित्याह भगवानुशना मुनिः ॥
भिक्षाटनसमुद्योगात्प्रागेवापि निमन्त्रितम् ।
अयाचितं तु तद्भैक्षं भोक्तव्यं मनुरब्रवीत् ॥
उपस्थानेन यत्प्रोक्तं भिक्षार्थं ब्राह्मणेन हि ।
तात्कालिकमिति ख्यातं तदत्तव्यं मुमुक्षुणा ॥
सिद्धमन्नं भक्तजनैरानीतं यन्मठं प्रति ।
उपपन्नं तदित्याहुर्मुनयो मोक्षकाङ्क्षिणः ॥
भिक्षाः पञ्चविधा ह्येताः सोमपानसमाः स्मृताः ।
तासामेकतमयाऽपि वर्तयन्सिद्धिमाप्नुयात् ॥

क्रतुः—संप्रार्थितमुपस्थानादसंक्लृप्तमयाचितम् ।
तत्सदैकान्नमप्यद्याद्भैक्षं माधूकराद्वरम् ॥
अयाचितं यथालाभं भोजनाच्छादनं भवेत् ।
निमन्त्रितोऽथवाऽश्नीयात्स्वगुणं न प्रकाशयेत् ॥
[* एकान्नं मधु मांसं च अन्नं विष्ठादिदूषितम् ।
हन्तकारं च नैवेद्यं प्रत्यक्षं लवणं तथा ॥
एतान्भुक्त्वा यतिर्मोहात्प्राजापत्यं समाचरेत् ।

एकान्नमिति एकस्वामिकमन्नम् ]

पाराशरः—यतीनामातुराणां तु वृद्धानां दीर्घरोगिणाम् ।
एकान्नेन न दोषोऽस्ति एकस्यैव दिने दिने ॥

क्रतुः—सुजीर्णोऽतिकृशो योगी दशान्तो विकलेन्द्रियः ।
पुत्रमित्रगुरुभ्रातृपत्नीभ्यो भैक्षमाहरेत् ॥

एतत्सर्वमशक्तयतिविषयम् ।

मनुः—जीवितात्ययमापन्नो योऽन्नमत्ति इतस्ततः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥
नाऽऽपो मूत्रपुरीषाभ्यां नाग्निर्दहनकर्मणा ।
न वायुः स्पर्शदोषेण नान्नदोषेण मस्करी ॥

परमहंसस्य तु विशेषमाह पितामहः—

* धनुश्चिह्नान्तर्गत ग्रन्थो घ. पुस्तक एव ।

अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया ।
जोषयी(ये)त सदा भोज्यं ग्रासमागतमस्पृहः ॥
सौवर्णलोहरौप्येषु ताम्राद्यश्ममयेषु च ।
अश्नन्भिक्षुर्न दुष्येत दुष्यते तु परिग्रहात् ॥
माधूकरमथैकान्नं परहंसः समाचरेत् ।

बृहदारण्यके–"अथ भिक्षाचर्यं चरन्ति" [ अ० ३ ब्रा०५।१ ] इति।

मैत्रायणी श्रुतिः–"त्रीन्वैणवान्दण्डान्दक्षिणे पाणौ धारयेदेकं वा यद्येकं तदा सशिखं वपनं कृत्वा विसृज्य यज्ञोपवीतं च त्रिषु वर्णेष्वेकागारं भैक्षमश्नीयान्माधूकरीं वा" इति काठकब्राह्मणम् । "चतुर्षु वर्णेषु भैक्षचर्यं चरेत् । पाणिपात्रेणाशनं कुर्यादौषधवत्प्राश्नीयात्प्राणसंधारणार्थं यथा मेदोवृद्धिर्न जायते" इत्यादि । मैत्रायणी श्रुतिः–"अथान्यः परिव्राडेकशाटीपरिहितो मुण्ड उदरपात्र्यरण्यनिष्ठो भिक्षार्थी ग्रामं प्रविशेत् । सायं प्रदक्षिणेनाविचिकित्सं सार्ववर्णिकं भैक्षचरणमभिशस्तपतितवर्जम्" इति । आरुणी श्रुतिः–"यतयो भिक्षार्थं ग्रामं प्रविशन्ति पाणिपात्रमुदरपात्रं वा । ॐ हि ॐ हि ॐ हीत्येतदुपनिषदं विन्यसेद्विद्वान्य एवं वेद" [ ख० ५ ]। "औषधवदशनमाचरेत्" [ आरु० ख० ३ ] इति।

गौतमः–हविः प्राश्य *यथाऽऽचम्य निराहारो भवेद्गृही ।
प्राश्याऽऽचम्य तथा भिक्षुर्निराहारो गृहे गृहे ॥
पात्रमस्य भवेत्पाणिस्तेन नित्यं गृहानटेत् ।
[ + उदरं पूर्णं कृत्वाऽथ सचेलं स्नानमाचरेत् ।
आपद्यपि न भोक्तव्यमेकान्नं पाणिपात्रिणा ॥
लौल्यात्तु यदि भुञ्जीत प्राणायामशतं चरेत् ॥ इति ।

स्नानमस्पृश्य स्पर्शसंदेहनिमित्तं न तु करभिक्षाशननिमित्तम् । तस्य माधूकरापेक्षयाऽप्युत्तमत्वाभिधानात् ।

तथा च स्कान्दे–करपात्रीति विख्यातो बाह्यपात्रविवर्जितः ।
तस्य पुण्यं शतगुणं भवत्येव दिने दिने ॥ इति । ]

* घ. पुस्तके समासे—प्रतिग्रहमादावन्ते चाऽऽचमनपक्षेऽसकृद्भिक्षाशनम् । चरमगृह एव चान्त आचमनमिति सकृदेव भिक्षाशनमिति भेदः । + धनुश्चिह्नान्तर्गतो ग्रन्थो घ. पुस्तक एव ।

उदरपात्रविषये यतिधर्मसमुच्चये विशेषः—

आस्येन तु यदाहारं गोवन्मृगयते मुनिः ।

मुण्डकोपनिषदि (?) "पाणिपात्रमुदरपात्रं वा" [आरु० ५] गेहे गेहे विशेत्कवलमात्रेण नापरं गृह्णीयात्पदे पदे भुञ्जन्नगच्छन्कुलाकुलेषु सर्वाशीति शौनकः ।

पाणिपात्रं चरन्योगी नासकृद्भैक्षमाचरेत् ।
तिष्ठन्भुञ्ज्याच्चरन्भुञ्ज्यान्मध्येनाऽऽचमनं तथा ॥

[इति] शौनकगौतमवचनाभ्यामाचमने विकल्पः ।

पाराशरः—ग्रामैकरात्रवासिनो नगरतीर्थावसथेषु पञ्चरात्रवासिन उदरादिपात्रिणोऽभिशस्तपतितवर्जं चातुर्वर्ण्यं भैक्षं चरन्त आत्मत्वेनावतिष्ठन्त इति ।

बौधायनः-भैक्षं वा सर्ववर्णेभ्य एकान्नं वा द्विजातिषु ।

ननूदरपात्रिणः परमहंसस्य बाह्यपात्राभावात्कथं भैक्षं माधूकरम् । उच्यते—आपदि पात्रं गृह्णीयात्पाणिना शकलेन वा ।

इत्यादिवचनात्परमहंसस्यापि यतेः कदाचित्तादृशप्रदेशप्राप्तिः स्यात्तत्र रिक्तहस्ते गृहमागते यतौ किमर्थमागतोऽयमिति न विदन्ति प्राकृता जनाः । तत उपवासः स्यात् । एवं दिने दिने तस्मिन्प्रदेश इतीयमापत्स्यात् । तस्यामापदि प्राप्तायां शुचिदेशस्थं वेणवादिशकलमादाय शीर्णपर्णपुटं वा कृत्वा तेन भैक्षमादायाश्नीयात् । भैक्षं माधूकरमश्नन्नपि परमहंसो न नैवेद्यं विसर्जयेत् ।

कुतः—ग्रासादाच्छादनादन्यन्न गृह्णीयात्कथंचन ।
यावदाहारयेत्तावत्प्रतिगृह्णीत नान्यथा ॥

इत्यादिवचनात् । माधूकरं भैक्षं चरन्नसंकल्पितेषु गृहेषु चरेत् । तदिदमुक्तम्—सप्तागाराण्यसंकल्पितानि चरेद्भैक्षम्, विधूमे सन्नमुशले, एकशाटीपरिवृतोऽजिनो वेति ।

याज्ञवल्क्यः—यतिपात्राणि मृद्वेणुदार्वलाबुमयानि च ।
सलिलं शुद्धिरेतेषां गोवालैश्चावघर्षणम् ॥

मृदादिप्रकृतिकानि यतीनां पात्राणि भवेयुः । तेषां सलिलं गोवालावघर्षणं च शुद्धिसाधनम् । इयं च शुद्धिर्भिक्षाचरणादिप्रयोगाङ्गभूता-

१ क. ख. ग. ञ्ननागच्छेत्कु° । २ घ. न वद° । ३ क. ख. °रिहितोऽजिनेन वे° ।

नोममेध्याद्युपहतविषया । तदुपघाते द्रव्यशुद्धिप्रकरणोक्ता द्रष्टव्या । अत एव मनुना—अतैजसानि पात्राणि यस्य[2] स्युर्निर्व्रणानि च ।
तेषामद्भिः स्मृतं शौचं चमसानामिवाध्वरे ॥ इति ।

चमसदृष्टान्तोपादानेन प्रायोगिकी शुद्धिर्दर्शिता ।

[*मृद्वंशालाबुवृक्षाणां गृह्णन्भिक्षार्थमुत्तमम् ।
पात्रमेकतमं शुद्धमव्रणं पक्ववर्जितम् ।
नित्यं भुञ्जीत तेनैव न त्यजेत्प्रयतो यतिः ॥ ]

पात्रान्तराभावे भोजनमपि तत्रैव कार्यम् । तद्भैक्षं गृहीत्वैकान्ते तेन पात्रेणान्येन वा तूष्णीमादाय भुञ्जीतेति देवलस्मरणात् । मृत्पात्रं तु भिक्षां विधाय त्याज्यमेव । तथा शिष्टाचारदर्शनात् । कलौ स्वपात्र-भोजननिषेधाच्च

द्वापरादियुगेष्वेव पात्रभोजी भवेद्यतिः ।
कलौ नैव तु भुञ्जीत स्वपात्रे योगवित्तमः । इति ब्रह्मवचनेन

कण्वः—तार्णं पार्णं च पाषाणमिति । अत्रिः—

मृद्दार्वलाबुजं पात्रं वैणवं तान्तवौपलम् ।
पार्णं तार्णं तथा क्षौमं पात्रं पर्णपुटं तथा ॥
उक्तानि यतिपात्राणि ब्रह्मणा विश्वयोनिना ।
करे कर्पटके चैव आयसे ताम्रभाजने ॥
भुञ्जन्भिक्षुर्न लिप्येत लिप्यन्ते गृहमेधिनः ।

+अत्र मृद्दारुमयादीनि तार्णपर्णपुटादीनि च यथायथं जलभिक्षाभो-जनोपयोगीनीति बोध्यम् ।

[⌣वटार्काश्वत्थपर्णेषु कुम्भीतिन्दुकपत्रयोः ।
विश्वस्तायतिपान्थानां न दोषः शौनकोऽब्रवीत् ॥ ]
⊙एवमाहृत्य पर्णानि कृत्वा पर्णमयीं पुटीम् ।
भिक्षार्थं पर्यटेद्भिक्षुस्तैजसे न कदाचन ॥

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. ग. पुस्तकयोर्नास्ति । + अत्रेत्यारभ्य बोध्यमित्यन्तो ग्रन्थो घ. पुस्तक एव । ⌣ धनुश्चिह्नान्तर्गतो ग्रन्थः क. ग घ. पुस्तकेषु नास्ति । ⊙ घ. पुस्तके समासे स्वयमितिपाठान्तरम् ।

१ क. ख. °नामे° । २ म. तस्य ।

विष्णुः—संस्कृत्य प्रणवेनाथ भिक्षापात्रं यथाविधि।
भास्कराभिमुखो भूत्वा संस्मरन्मनसा हरिम्॥
सव्येनाऽऽदाय पात्रं तु दण्डं वै दक्षिणेन तु।

कण्वः—नमस्कृत्य तथाऽऽदित्यं समाक्रान्तमु(उ)पानहौ।
सर्वदोपानहौ भिक्षुर्न त्यजेत्तु कदाचन॥
उदपात्रं च भिक्षा च दुष्येद्दत उपानहौ।
विधूमे सन्नमुसले व्यङ्गारेऽभुक्तवज्जने॥
कालेऽपराह्णभूयिष्ठे भिक्षाटनमथाऽऽचरेत्।

आदित्यपुराणे-मेध्यं भैक्षं चरेन्नित्यं सायाह्ने वाग्यतः शुचिः।
एकवासा विशुद्धात्मा मन्दगामी युगान्तदृक्॥
यथालब्धं तदश्नीयात्पूजासंस्कारवर्जितः।

अत्रिः-अनिन्द्यं वै व्रजेद्गेहं निन्द्यं गेहं तु वर्जयेत्।
अनावृते विशेद्द्वारि गेहे नैवाऽऽवृते व्रजेत्॥
न वीक्षेद्द्वाररन्ध्रेण भिक्षां लिप्सुः क्वचिद्यतिः।
न कुर्याद्वै क्वचिद्घोषं न द्वारं ताडयेत्क्वचित्॥

तथा चोक्तम्-प्राणवृत्त्यैव संतुष्येन्मुनिर्नैवेन्द्रियप्रियैः।
ज्ञानं यथा न नश्येत नावकीर्येत वाङ्मनः॥
अलब्ध्वा न विषीदेत काले कालेऽशनं क्वचित्।
लब्ध्वा न हृष्येद्धृतिमानुभयं दैवतन्त्रितम्॥
आहारार्थं समीहेत युक्तं तत्प्राणधारणम्।
तत्त्वं विमृश्यते तेन तद्विज्ञाय विमुच्यते॥
यदृच्छयोपपन्नान्नमद्याच्छ्रेष्ठमुतापरम्।
तथा वासस्तथा शय्यां प्राप्तं प्राप्तं भजेन्मुनिः॥

अत्रिः—नैव सव्यापसव्येन भिक्षाकाले व्रजेद्गृहान्।
अनिन्द्यातिक्रमे योगी प्राणायामशतं चरेत्॥

मेधातिथिः-अदुष्टापतितं साधुं यतिर्यः परिवर्जयेत्।
स तस्य सुकृतं दत्त्वा दुष्कृतं प्रतिपद्यते॥
तथैव च गृहस्थस्य निराशो भिक्षुको गतः।
हुतं दत्तं तपोऽधीतं सर्वमादाय गच्छति॥

१ क. °दुष्प°।

असंस्कृता तु या कन्या उदक्याचोदिता तु या ।
तया दत्तं न गृह्णीयात्प्राण्यङ्गेनाऽऽयसेन वा ॥
पृथक्कृत्वा तु या भिक्षाऽऽघ्राता मार्जारमूषकैः ।
वातोपहतशुष्का[1] च भिक्षा योपहता भवेत् ॥

शौनकः-पीडयित्वाऽपि चाऽऽत्मानमल्पान्नं संप्रयच्छति ।
सा भिक्षा हिंसिता ज्ञेया तादृशीं वर्जयेद्यतिः ॥
पञ्चाहं सप्तरात्रं वा यत्र भिक्षा न लभ्यते ।
तद्गृहं वर्जयेद्भिक्षुश्चण्डालगृहवत्सदा ॥

अत्रिः—हितं मितं सदाऽश्नीयाद्यत्सुखेनैव जीर्यते ।
धातुः प्रकुप्यते येन तदन्नं वर्जयेद्यतिः ॥
या तु पर्युषिता भिक्षा नैवेद्यादिषु कल्पिता ।
तामभोज्यां विजानीयाद्दाता च नरकं व्रजेत् ॥
आयसेन तु पात्रेण यदन्नमुपदीयते ।
भोक्ता विष्ठासमं भुङ्क्ते दाता च नरकं व्रजेत् ॥

अथ भैक्षप्रशंसा ।

विष्णुः—न भिक्षायां भवेद्दोषो न च भिक्षा प्रतिग्रहः ।
सोमपानसमा भिक्षा तस्मादहरहश्चरेत् ॥

शातातपः-भिक्षा माधूकरी नाम सर्वपापप्रणाशिनी ।
अवधूता च पूता च सोमपानं दिने दिने ॥
भिक्षाहारो निराहारो भिक्षा नैव प्रतिग्रहः ।
श्रोत्रियान्नं च भैक्षं च हुतशेषं च यद्धविः ॥
आनखाच्छोधयेत्पापं तुषाग्निरिव काञ्चनम् ।
गङ्गायाः सलिलं पुण्यं शालग्रामशिला तथा ॥
भिक्षान्नं पञ्चगव्यं च पवित्राणि युगे युगे ।

कण्वः—अब्बिन्दुं यः कुशाग्रेण मासि मासि समश्नुते ॥
निरपेक्षस्तु भिक्षाशी स तु तस्माद्विशिष्यते ।
[ * तप्तकाञ्चनवर्णेन गवां मूत्रेण यावकम् ।
पिबेद्द्वादश वर्षाणि न तद्भैक्षसमं भवेत् ॥

---

१ क. ख. हता शुष्कान्ना भिक्षोश्चोप° ।

---

* धनुश्चिह्नान्तरगतो ग्रन्थो घ. पुस्तक एव वर्तते ।

शाकभक्षाः पयोभक्षा ये च यावकभक्षकाः।
सर्वे ते भैक्षभक्षस्य कलां नार्हन्ति षोडशीम् ॥

श्रुतिरपि—"कामक्रोधलोभमोहदम्भदर्पाहंकारममकारानृतादींस्त्यजेत्" "चतुर्षु वर्णेषु भैक्षचर्यं चरेत्" "अभिशस्तपतितवर्जं पाणिपात्रेणाशनं कुर्यादौषधवत्प्राश्नीयात्प्राणसंधारणार्थं यथा मेदोवृद्धिर्न जायते" "अरण्यनिष्ठो भिक्षार्थी ग्रामं प्रविशेत्" इति ]

मेधातिथिः—अकार्पण्यं तु बह्वन्नं मन्यन्ते यत्र मानवाः।
निरीक्षन्ते त्वनुद्विग्नास्तद्गृहं यत्नतो व्रजेत् ॥

अत्रिः—गोदोहमन्नपाकं वा सक्तुपेषणमेव वा।
एककालं प्रतीक्षेत दर्शनेन विना यतिः ॥
क्षणमेकं न तिष्ठेद्वै गृहिणां दर्शनाद्यतिः।
संभ्रमं च न वेक्षेत भिक्षादानार्थमुत्तमम् ॥
न कुप्येतानुकम्पेत न हृष्येन्नैव कुत्सयेत्।
अतिक्रम्य गृहं लोभान्न पुनस्तद्गृहं विशेत् ॥
यथा मध्वाददानोऽपि भृङ्गः पुष्पं न बाधते।
तद्वन्माधूकरीं भिक्षामाददीत गृहाधिपात् ॥
यावतोदरपूर्तिः स्यात्तावद्भैक्षं समाचरेत्।
सिक्थमप्यधिकं भिक्षुराददानो व्रजत्यधः ॥

क्रतुः—पञ्चसप्तगृहाणां च भिक्षामिच्छेत्क्रियावताम्।
गोदोहमात्रमाकाङ्क्षी निष्क्रान्तो न पुनर्विशेत् ॥

वसिष्ठः—"ब्राह्मणकुले वा यल्लभेत तद्भुञ्जीत मधुमांसवर्जं सायं प्रातर्न च तृप्येत्" इति। सायं प्रातरिति त्वशक्तभिक्षुविषयम्। एककालं चरेद्भैक्षमित्यादिबहुवचनविरोधात्।

बह्वन्नं पच्यते यत्र मन्यन्ते यत्र मानवाः।
अनुद्विग्नाः प्रयच्छन्ति तं देशं यत्नतो व्रजेत् ॥
भिक्षाटनं प्रकुर्वाणो ह्यमेध्यं यदि वा स्पृशेत्।
भिक्षां गृहीत्वा स्नात्वा च प्राणायामान्षडाचरेत् ॥
अमेध्यनिचयं चैव स्पृष्ट्वा देवलकं यतिः।
सपात्रो विधिवत्स्नात्वा विष्णुं ध्यात्वा विशुध्यति ॥

१ ख. एतत्का°। २ ख. न दुष्येच्च°। ३ न्। स्वल्पम°। १ ग. घ. °ध्यमादि।

उदक्याशवचाण्डालचौरनग्नकपालिभिः ।
स्पृष्ट्वा भिक्षां त्यजेद्भिक्षुः सचैलो जलमाविशेत् ॥
[*भिक्षापात्रविशुद्ध्यर्थमुपमुच्याप्युपानहौ ।
ततो ग्रामं व्रजेन्मन्दं युगमात्रावलोककः ॥
ध्यायन्हरिं च तच्चित्त इदं वरामुदीरयेत्(?) ।
विष्णुस्तिर्यगधोर्ध्वं मे वैकुण्ठो विदिशं दिशम् ॥
पातु मां सर्वतो रामो धन्वी चक्री च केशवः । ]
[+तीर्थे विवाहे यात्रायां सङ्ग्रामे देशविप्लवे ॥
प्रवासे ग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति ।
कुड्ये काष्ठे रथे मञ्चे नौकायां गजवृक्षयोः ॥
तृणौघजलसंघाते स्पृष्टास्पृष्टिर्न विद्यते । ]
पादत्राणे स्थितौ पादावस्पृश्यं स्पृशते यदि ॥
पादत्राणपरित्याग आचान्तः शुचितामियात् ।
विना दण्डोदपात्रं तु न गच्छेद्यतिसत्तमः ॥
भिक्षाकाले दण्डमेकं नोदपात्रं कदाचन ।

याज्ञवल्क्यः—अप्रमत्तश्चरेद्भैक्षं सायाह्नेऽनभि×लक्षितः ।
रहिते=भिक्षुकैर्ग्रामे यात्रामात्रमलोलुपः ॥

अप्रमत्तो वाक्चक्षुरादिचापलरहितः ।

नक्तात्परश्चोपवास उपवासादयाचितम् ।
अयाचितात्परं भैक्षं तस्माद्भैक्षेण वर्तयेत् ॥

अत्रिः—नैव सव्यापसव्येन भिक्षाकाले व्रजेद्गृहान् ।
अनन्तरं क्रमाद्भिक्षां प्रशस्तां न तु कीर्तयेत् ॥
संभवे बहुगेहानां न तु तेष्वेव नित्यशः ।
भिक्षाटनमुपक्रम्य क्वचिल्लोभेन भैक्षभुक् ॥
नातिक्रामेद्गृहान्मोहाद्यत्र बाधा न विद्यते ।
गृहातिक्रमणं कुर्याद्यत्र लोभादिना यतिः ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो घ. पुस्तके वर्तते । + धनुश्चिह्नान्तर्गतग्रन्थः ख. पुस्तके वर्तते ।
× घ. पुस्तके समासे–ज्योतिर्ज्ञानोपदेशादिनाऽचिह्नितः । = केवलभिक्षणशीलैः पाखण्ड्यादिभिर्वर्जिते ग्रामे ।

प्राणायामशतं कुर्यात्प्रायश्चित्तं तथा यतिः ।
नक्तभोजी भवेद्भिक्षुर्मोक्षधर्मानुशासनात् ॥
मृद्वार्यन्नं दिवाऽऽदाय रात्रौ शौचादिकं यतिः ।
मृद्वार्यन्नं सदा भिक्षू रात्रौ नैवाऽऽहरेत्क्वचित् ॥
निशायाः प्रथमे यामे जपहोमार्चनं श्रुतौ ।
स्वाध्यायो भोजनं प्रोक्तं वर्जयित्वा महानिशाम् ॥
पश्चिमे तु तथा यामे ब्रह्माभ्यासो विधीयते ।
जपस्नानादिकं [1]होमो वर्जयित्वा तु भोजनम् ॥
देवोद्याने साधुगृहे महालयसरित्सु च ।
रात्रौ गृह्णन्न दुष्येत तटाके विमले ह्रदे ॥

जमदग्निः—अश्नन्माधूकरीं भिक्षां नैवेद्ये तु विसर्जिते ।
परपाकं न गृह्णीयात्किंचिदन्नमुपस्थितम् ॥

सर्वमाधूकररूपे नैवेद्ये भगवत्समर्पिते सतीत्यर्थः ।

व्यासः—श्रद्दधानस्य भोक्तव्यं चौरस्यापि विशेषतः ।
नत्वेवं बहुयाज्यस्य यश्चोपनयते बहून् ॥
[*शूद्रशेषं न चाश्नीयाच्छ्राद्धान्नं शिशुकैः सह ।
दंपत्योर्भुक्तशेषं तु भुक्त्वा चान्द्रायणं चरेत् ॥

इति एकभिक्षाविषयम् ]

अत्रिः—उद्यतामाहृतां भिक्षां पुरस्तादप्रचोदिताम् ।
भोज्यां प्रजापतिर्मेने अपि दुष्कृतकारिणः ॥

दत्तात्रेयः—कृते देशं त्यजेद्ग्रामं त्रेतायां द्वापरे कुलम् ।
कर्तारं तु कलौ दुष्टं त्यक्त्वा भैक्षं चरेद्यतिः ॥
भैक्षादन्यन्न याचेत न चैवोपविशेत्क्वचित् ।
उद्यतां नावमन्येत न चै[2]नां वर्जयेत्पुनः ॥
भिक्षाटने स्त्रियः काश्चिच्छ्रोत्रियाणां गृहे गृहे ।
तासां विलोकनं कार्यं यथा मातुः स्वसुस्तथा ॥
आत्मसंमितमाहारमाहरेदात्मवान्यतिः ।
अत्यन्तक्षुधितस्यापि समाधिर्नैव जायते ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो ग. घ. पुस्तकयोर्वर्तते ।

---

१ क. होमं । २ ख. °नां भावयें° ।

कात्यायनः–आहारस्य तु द्वौ भागौ तृतीयमुदकस्य तु ।
वायोः संचरणार्थाय चतुर्थमवशेषयेत् ॥
यमः—आहारस्य चतुर्भागमर्धं वाऽप्याऽऽहरेद्यतिः ।
युवा चैवोरुजः शक्तः प्रसङ्गं तत्र वर्जयेत् ॥
अन्नसङ्गाद्बलं दर्पो विषयासक्तिरेव च ।
कामः क्रोधस्तथा लोभः पतनं नरके ध्रुवम् ॥
तावज्जितेन्द्रियो न स्याद्विजितान्येन्द्रियः पुमान् ।
न जयेद्रसनं यावज्जितं सर्वं जिते रसे* ॥
अष्टौ ग्रासा मुनेः प्रोक्ताः षोडशाऽऽरण्यवासिनः ।
द्वात्रिंशत्तु गृहस्थस्य यथेष्टं ब्रह्मचारिणः ॥
तत्र ग्रासप्रमाणं व्याघ्र आह—
चतुरङ्गुलमुत्सेधं चतुरङ्गुलमायतम् ।
एतद्ग्रासप्रमाणं तु व्याघ्रेण परिभाषितम् ॥
भुक्त्वा भुक्त्वोपभुञ्जीत नियमार्थं यतिः सदा ।
भैक्षादुपावृत्तो भिक्षुः पश्चात्केनचिदाहृतम् ॥
फलं मूलं पयस्तक्रं दधि पुष्पं घृतं तथा ।
शाकादिव्यञ्जनं पेयं गृह्णन्भिक्षुर्न दुष्यति ॥
जाबालः–एकपात्रं तु भिक्षूणां निर्दिष्टं फलमुत्तमम् ।
नैव दोषो द्विपात्रेण अशक्तौ व्याधिपीडिते ॥
आश्वलायनः–उपावृत्तस्ततो भैक्षाद्गत्वा तीर्थमकर्दमम् ।
प्रक्षाल्यान्तर्हिते देशे भैक्षपात्रं विधाय तु ॥
मृत्तोयेन पृथक्पादौ हस्तौ प्रक्षालयेत्तथा ।
आचम्याथ त्रिराचम्य प्राणांस्तु पुनराचमेत् ॥
आपोशनादि कृत्वा तु पञ्च प्राणाहुतीः परम् ।
केशकीटादिभिर्व्याप्तं पिण्डमुत्सृज्य दूरतः ॥
हस्तं प्रक्षाल्य भस्माथ क्षिप्त्वाऽश्नीयात्ततः पुनः ।
केशादिमुखसंलग्नं क्षिप्त्वा ग्रासं तु तत्क्षणात् ॥
अपां द्वादशगण्डूषैः क्षाल्याऽऽस्यं भोजनं ततः ।
वामेनाङ्गेन संयुक्तं निधायैव कमण्डलुम् ॥

* ख. पुस्तके । रस इत्युत्तरं संन्यासेन प्राह्याः । इति वर्तते ।

१ क. वाऽथाऽऽह° । २ क. वाऽप्यरुक्श° । ३ घ. त्रं निधा° । ४ घ. क्षालयन्भो° ।

विष्णुः—सर्वेषामेव भिक्षूणां त्यक्तसर्वममत्वताम्(?) ।
अतैजसानि पात्राणि भुज्यर्थं क्लृप्तवान्मनुः ॥

मनुः—एककालं चरेद्भैक्षं न प्रसज्येत विस्तरे ।
भैक्षे प्रसक्तो हि यतिर्विषयेष्वपि सज्जति ॥

बौधायनः–पादौ प्रक्षाल्याऽऽचम्य त्रीन्प्राणायामान्धारयित्वा भैक्ष-मोमिति वारिणा संप्रोक्ष्य दक्षिणेन स्पृष्ट्वा प्रणवेनाभिमन्त्र्याश्नी-यादिति ।

यमः—प्रोक्षितं प्रणवेनैव हुतमाध्यात्मिकादिषु ।
शरीरं व्रणवत्पश्येदन्नं तु व्रणलेपवत् ॥

यतिधर्मसमुच्चये–गङ्गातोयाभिषिक्तां तु भिक्षां योऽश्नाति योगवित् ।
न तत्क्रतुशतैरिष्ट्वा फलं प्राप्नोति मानवः ॥
सांतपनसहस्रं तु चान्द्रायणशतानि च ।
अश्वमेधाष्टकं चैव तद्विष्णोः शेषमुत्तमम् ॥
विष्णोर्नैवेद्यसंशुद्धं मुनिभिर्भोज्यमुच्यते ।
अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत् ॥
गङ्गातोयं च भैक्षं च वैष्णवान्नं विशेषतः ।
आनखान्मोचयेत्पापं मन्त्रपूतं हविर्यथा ॥

छान्दोग्यश्रुतिः–"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" [अ०७।२६।२] इति । हारीतः—गुरवे निवेदितमनुज्ञातममृतसंमितं प्राहुर्यदश्नन्ब्रह्मचारी ब्रह्मसिद्धिमवाप्नोति मोक्षसिद्धिं तु भिक्षुकः ।

विष्णुः—भैक्षं यवागूतक्रं वा पयो यावकमेव च ।
फलं मूलं विपक्वं वा कणपिण्याकसक्तवः ॥
इत्येते वै शुभाहारा योगिनः सिद्धिकारकाः ।
त्वङ्मूलपत्रपुष्पाणि ग्राम्यारण्यफलानि च ॥
कणयावकपिण्याकशाकतक्रपयोदधि ।
भिक्षां सर्वरसोपेतां हिंसावर्जं समाचरेत् ॥
उत्तानवदनं कृत्वा ब्रह्मभावेन भावितः ।
पञ्च प्राणाहुतीर्दद्यान्मन्त्रैस्तु श्रुतिचोदितैः ॥

१ ग. घ. °दश्नीयादन्न° । २ घ. °वितम्° । प° ।

ॐकारपूर्वाः स्वाहान्ता मन्त्रास्तैस्तत्समाचरेत् ।
नैवाऽऽहुतीः स्पृशेद्योगी दन्तौष्ठाभ्यां कदाचन ॥
नाऽऽस्वादयेद्रसं तत्र जिह्वया धर्मवित्क्वचित् ।
अनेन विधिना हुत्वा पञ्च प्राणाहुतीः पृथक् ॥
शेषमौषधवत्प्राश्य स्थित्यर्थं श्रुतिशासनात् ।
मृष्टामृष्टे न कुर्वीत रागद्वेषौ च चेतसा ॥
मिताशनो भवेन्नित्यं भिक्षुर्मोक्षपरायणः ।
कामदर्पादयो दोषा न भवन्ति मिताशिनः ॥
अन्तर्जानु तथा कृत्वा बाहू पादौ तथा भुवि ।
भाजनं वै समादाय भिक्षुः सव्यकरेण तु ॥
दक्षिणेन करेणैव चिन्मयेनान्तरात्मना ।
ध्यायन्स भोजनं कुर्याद्यावन्नावभृथो भवेत् ॥
न स्पृशेत्सव्यहस्तेन भुञ्जानोऽन्नं कदाचन ।
न पादौ न शिरो बस्तिं न पदा भाजनं स्पृशेत् ॥

पात्रमधिकृत्य यो विधिरुक्तस्तस्यापवादमाह—

अन्यपात्रे हविर्भुङ्क्ते हव्यकव्येष्वनुज्ञया ।
राजते ताम्रसौवर्णे तत्रायं नास्ति वै विधिः ॥
सौवर्णेषु च पात्रेषु ताम्ररूप्यमयेषु च ।
भुञ्जन्भिक्षुर्न दुष्येत दुष्यते तत्प्रतिग्रहात् ॥
भुक्त्वा पात्रं यतिर्नित्यं क्षालयेन्मन्त्रपूर्वकम् ।
न दुष्येत्तस्य तत्पात्रं यज्ञेषु चमसो यथा ॥

क्रतुः—[ *यावत्पात्रमनुद्धृत्य तावद्विप्रो न शुध्यति ।
उद्धृतेऽप्यशुचिस्तावद्यावन्नो मृज्यते मही ॥ ]
अवीरा स्वैरिणी कुष्ठी गर्भभर्तृद्रुहाऽसती ।
कन्याधात्रीपुनर्भूभ्यो नाऽऽददीतोद्यतामपि ॥

मनुः—न[3]चोत्पत्तिनिमित्ताभ्यां न नक्षत्राङ्गविद्यया ।
नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ॥

* धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तके वर्तते

१ क. दू । सद्दृ° । २ ख. भुक्तं । ३ क. ख. चोत्पातनि° ।

अत्रिः—कुटुम्बसंकटं चैव मलेनोपहतं गृहम् ।
पीडयाऽन्नं प्रयच्छेद्यस्तद्गृहं वर्जयेद्यतिः ॥
उदक्याचोदितं ह्यन्नं द्विजान्नं शूद्रचोदितम् ।
प्राण्यङ्गे चाऽऽयसे क्लृप्तं भिक्षुर्यत्नेन वर्जयेत् ।
नाश्नन्ति ह्यशु[1]चेर्देवा नाश्नन्ति वृषलीपतेः ॥
स्त्रीजितान्नं न चाश्नन्ति तदन्नं वर्जयेद्यतिः ।
चिकित्सकस्य मृग[2]याशल्यहर्तुश्च पाशिनः ॥
कुलटाषण्ढयोरन्नमुद्यतं संत्यजेद्यतिः ।
श्रोत्रियान्नं न भिक्षेत श्रद्धाभक्तिबहिष्कृतम्[3] ॥
व्रात्यस्यापि गृहे[4] भिक्षेच्छ्रद्धाभक्तिपुरस्कृतम्[5] ।
दर्व्या देयं घृतं चान्नं लवणं व्यञ्जनं तथा ॥
अपक्वं स्नेहपक्वं च न तु दर्व्या कदाचन ।
हस्तदेयं तु यद्दर्व्या दर्व्या देयं तु हस्ततः ॥
एतद्यो ब्राह्मणोऽश्नीयात्सोऽश्नीयान्मूत्ररेतसी ।

विष्णुः—यदि भैक्षं समादाय पर्युषेद्योगवित्तमः ।
स पर्युषितदोषेण भिक्षुर्भवति वै कृमिः ॥
तस्माद्भिक्षां समादाय पर्युषेन्न कदाचन ।
भिक्षार्थं प्रविशेद्ग्राममभावे वनवासिनाम् ॥
स्ववृत्तस्य गृहे भिक्षेन्न तु तेष्वेव नित्यशः ।
अभावे बहुगेहानां तेषु भिक्षेदलोलुपः ॥

देवलः—उदक्याशवचाण्डालचौरनग्नकपालिकान् ।
पतितान्पिशुनान्स्पृष्ट्वा भिक्षां भिक्षुः परित्यजेत् ॥

एतद्यतिरिक्तास्पृश्यमात्रस्पर्शे जाबालः—
भिक्षाटने च संन्यासी अमेध्यं यदि संस्पृशेत् ।
भिक्षां गृह्य ततः स्नात्वा प्राणायामान्[6]षडाचरेत् ॥

जमदग्निः—श्वकाकक्रोडवेश्याविट्खरोष्ट्रस्पर्शने सति ।
सभैक्षस्तु जले मग्नः शुद्धो जप्त्वाऽघमर्षणम् ॥

१ क. ख. °शुचौ देशे । २ क. °गयोः शि° । ख. °गयोः शिल्पह° । ३ क. म् । बालस्या° ।
४ क. °हे भुङ्क्ते श्रद्धा° । ५ ख. °स्कृते । द° । ६ क. ख. ग. °मान्समाच° ।

जाबालिः—भिक्षाटने च संन्यासी श्वामेध्यं यदि संस्पृशेत् ।
भिक्षां गृह्य ततः स्नात्वा प्राणायामान्षडाचरेत् ॥
आदित्यपुराणे—निमन्त्रितस्तु संन्यासी यदा भैक्षं समाचरेत् ।
लोभात्तत्र प्रवर्तेत पतत्येव न संशयः ॥
यत्किंचिद्दीयमानं तु गृहिणीकरसंस्थितम् ।
भिक्षां भिक्षुर्न गृह्णीयात्काकयोनिषु जायते ॥
अत्रिः—उपस्थानाद्यदा पूर्वं भिक्षार्थं देशितो[1] भवेत् ।
न गच्छेत्तद्गृहं भिक्षुस्तदहर्वै कथंचन ॥
द्वावेवाऽऽश्रमिणौ भोज्यौ वानप्रस्थो गृही तथा ।
अभोज्यमन्नमन्येषामितरेषां तु लिङ्गिनाम् ॥
मेधातिथिः—ब्राह्मणक्षत्रियविशां मेध्यानां भैक्षमाचरेत् ।
तत्राप्यसंभवे पूर्वादादद्दीतोत्तरोत्तरात्[2] ॥
द्विजाभावे तु संप्राप्त उपवासत्रये[3] गते ।
भैक्षं शूद्रादपि ग्राह्यं रक्षेत्प्राणान्द्विजोत्तमः ॥
इति भिक्षाप्रशंसा ।
भिक्षाशनानन्तरं[4] शेषकालं पुराणश्रवणेन नयेत् । तथा च दक्षः—
इतिहासपुराणाभ्यां षष्ठसप्तमकौ[5] नयेत् ।
कालाविति शेषः ।
अङ्गिराः—पुराणश्रवणे भक्तिर्मूर्खस्यापि प्रवर्तते ।
भक्त्याऽविच्छिन्नया मुक्तिस्तस्मात्पौराणमभ्यसेत् ॥
तदभ्यासात्परं ब्रह्मभावमापद्यते मुनिः* ।
बृहस्पतिः—बन्धमोक्षविभागज्ञो बुद्ध्वा चेन्मोक्षणेच्छया ।
उपायान्वेषणे युक्तः को न मुच्येत बन्धनात् ॥
यथा चित्तं समायुक्तं जन्तोर्विषयगोचरे ।
यदि नारायणेऽप्येवं को न मुच्येत बन्धनात् ॥
अशास्त्रदृष्टमार्गेषु यथा चित्तक्षयो भवेत् ।
यदेवं शास्त्रदृष्टेषु को न मुच्येत बन्धनात् ॥

---

* ख पुस्तके—मुनिरित्युत्तरं जीवबन्ध इति वर्तते ।

१ ग. घ. °शिनो भ° । २ क. घ. °त्तरम् । द्वि° । ३ क. ख. °सद्वये । ४ ग. घ. °क्षाटना° । ५ ग. घ. °मासकं ।

आदरेण यथा स्तौति धनवन्तं धनेच्छया ।
तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥
यथा सुनिपुणः सम्यक्परदोषेक्षणं प्रति ।
तथा चेन्निपुणः स्वेषु को न मुच्येत बन्धनात् ॥
अर्थार्थी[1] यानि कर्माणि करोति कृपणो जनः ।
तान्येव यदि मोक्षार्थी को न मुच्येत बन्धनात् ॥
यावत्प्रलपते हृष्टो देशराज्यादिकं बहु ।
तावच्चेत्प्रलपेच्छास्त्रं को न मुच्येत बन्धनात् ॥
आत्मनो[2] येन यत्नेन लोकस्य कुरुते प्रियम् ।
आत्मनो यदि तेनैव को न मुच्येत बन्धनात् ॥
सुतां रूपवतीं दृष्ट्वा यथा चित्तं न कम्पते ।
तथाचेत्परदारेषु को न मुच्येत बन्धनात् ॥
स्तूयमानो यथा नित्यं सुप्रसन्नो भवेन्नरः ।
यद्येवं निन्द्यमानोऽपि को न मुच्येत बन्धनात्[3] ॥
अपापमशठं वृत्तमजिह्मं नित्यमाचरेत् ।
इन्द्रियाण्युपसंहृत्य कूर्मोऽङ्गानीव सर्वशः ॥
क्षीणेन्द्रियमनोबुद्धिर्निरीक्षेत निरिन्द्रियः ।
निर्द्वन्द्वो निर्नमस्कारो निःस्वधाकार एव च ॥
निर्ममो निरहंकारो निरपेक्षो निराशिषः ।
निराशः सर्वभूतेषु निराशीर्निष्परिग्रहः ॥
सर्वज्ञः सर्वतो मुक्तो मुच्यते नात्र संशयः ।
[ *यं तु सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् ॥
न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः ।
गूढधर्माश्रितो विद्वानज्ञातचरितं चरेत् ॥
अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् ] ।

[+अथ त्रिदण्डिनः ।]

दक्षः—वैणवेन त्रिदण्डेन न त्रिदण्डीति कथ्यते ।
अध्यात्मदण्डयुक्तो यः स त्रिदण्डीति कथ्यते ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तक एव । + धनुश्चिह्नान्तर्गतं ख. पुस्तके वर्तते ।

---

१ ख. अर्थार्थी या°। २ क. घ. °त्मना ये°। ३ ख. °त् । अथ जीवन्मोक्षः । बृहस्पतिः । अ°।

वागादिदण्डयुक्तस्तु प्रत्यगात्मन्यवस्थितः ।
परब्रह्मणि लीनो यः स त्रिदण्डी व्यवस्थितः ॥

यमः—श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः ।
न हृष्यति न च स्तौति स विज्ञेयो जितेन्द्रियः ॥

विष्णुपुराणे—

निःसङ्गता मुक्तिपदं यतीनां सङ्गादशेषाः प्रभवन्ति दोषाः ।
आरूढयोगोऽपि निपात्यतेऽधः सङ्गेन योगी किमुताल्पसिद्धिः ॥
मनोरथानां न समाप्तिरस्ति वर्षायुतेनाप्यथवाऽपि लक्षैः ।
पूर्णेषु पूर्णेषु पुनर्नवानामुत्पत्तयः सन्ति मनोरथानाम् ॥
यावतः कुरुते जन्तुः संबन्धान्मनसः प्रियान् ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
एकस्यापि न पर्याप्तं तस्मात्तृष्णां परित्यजेत् ॥
या दुस्त्यजा दुर्मतिभिः पूर्यतो या न पूर्यते ।
तां तृष्णां संत्यजन्प्राज्ञः सुखेनैवाभिपूर्यते ॥

[ *नारदः—विद्याबुद्धिरविद्यायामज्ञानात्तात जायते ।
बालोऽग्निं किं न खद्योतमसुरेश्वर मन्यते ॥ ]
तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये ।
आयासायापरं कर्म विद्याऽन्या शिल्पनैपुणम् ॥
कः केन रक्ष्यते जन्तुर्जन्तुः कः केन हन्यते ।
हन्ति रक्षति चैवाऽऽत्मा असत्साधु समाचरन् ॥
तापत्रयेणाभिहतं यदेतदखिलं जगत् ।
तदा शोच्येषु भूतेषु द्वेषं प्राज्ञः करोति कः ॥
यदा न कुरुते भावं सर्वभूतेषु पापकम् ।
समदृष्टेस्तदा पुंसः सर्वाः सुखमया दिशः ॥
अन्येषां यानि पापानि चिन्तयत्यात्मनो यथा ।
तस्य पापागमस्तात हेत्वभावान्न विद्यते ॥

* धनुश्चिह्नान्तर्गतो ग्रन्थो ग. घ. पुस्तकयोर्नास्ति ।

१ घ. षां यो न पा ।

कर्मणा मनसा वाचा परपीडां करोति यः ।
तद्बीजं जन्म फलति प्रभूतं तस्य चाशुभम् ॥
सोऽहं न पापमिच्छामि न करोमि वदामि वा ।
चिन्तयन्सर्वभूतस्थमात्मन्यपि च केशवम् ॥
शारीरं मानसं दुःखं दैवं भूतभवं तथा ।
सर्वत्र समचित्तस्य तस्य मे जायते कुतः ॥
एवं सर्वेषु भूतेषु भक्तिरव्यभिचारिणी ।
कर्तव्या पण्डितैर्ज्ञात्वा सर्वभूतमयं हरिम् ॥
सर्वभूतात्मके तात जगन्नाथे जगन्मये ।
परमात्मनि गोविन्दे मित्रामित्रकथा कुतः ॥
त्वय्यस्ति भगवान्विष्णुर्मयि चान्यत्र[1] च स्थितः ।
यतस्ततोऽयं मित्रं वै शत्रुश्चेति पृथक्कुतः ॥
देवा मनुष्याः पशवः पक्षिवृक्षसरीसृपाः ।
रूपमेतदनन्तस्य विष्णोर्भिन्नमिव[2] स्थितम् ॥
एतद्विजानता सर्वं जगत्स्थावरजङ्गमम् ।
द्रष्टव्यमात्मवद्विष्णुर्यतोऽयं विश्वरूपधृक् ॥
एवं ज्ञाते स भगवाननादिः परमेश्वरः ।
प्रसीदत्यच्युतस्तस्मिन्प्रसन्ने क्लेशसंक्षयः ॥

मनुः—अस्थिस्थूणं स्नायुबद्धं मांसशोणितलेपनम् ।
चर्मावनद्धं दुर्गन्धं पूर्णं मूत्रपुरीषयोः ॥
जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यं च भूतावासमिमं त्यजेत्[3] ॥

[ अ० ६।७६।७७ ]। सेन्द्रियदेह आत्मबुद्धिं विवेकबुद्ध्या त्यजेदिति श्लोकार्थः[4] ।

नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा ।
तथा त्यजन्निमं देहं कृच्छ्रग्रामाद्विमुच्यते ॥

[ अ०६।७८ ] कृच्छ्रग्रामाद्दुःखसमुदायात् ।

विष्णुः—त्यक्त्वा लोकांश्च वेदांश्च विषयानिन्द्रियाणि च ।
आत्मन्येव स्थितो यस्तु प्राप्नोति परमां गतिम् ॥

१ ख. °त्र संस्थितः°। २ ख. °भिन्नं व्यव°। ३ क. °त्। से°। ४ क. °र्थः। साम्बपुराणे-न°।

दोषदर्शी भवेत्तत्र यत्र रागः प्रवर्तते ।
अनिष्टवद्भितं पश्येत्ततः क्षिप्रं विरज्यते ॥
यदि नामास्य कायस्य यदन्तस्तद्बहिर्भवेत् ।
दण्डमुद्यम्य लोकोऽयं शुनः काकांश्च वारयेत् ॥
यान्येव मलवाहीनि पूतिच्छिद्राणि योषिताम् ।
तान्येव खलु काम्यानि अहो पुंसां विडम्बना ॥
चर्मखण्डं द्विधा भिन्नमपानोद्गारधूपितम्[1] ।
ये रमन्ति नरास्तेभ्यः साहसं किमतः परम् ॥
पृथिव्यां बीजवत्पुंसि तिष्ठत्येव शुभाशुभम् ।
आब्रह्मणः परिज्ञानात्संरत्येवं[2] नो ततः ॥
यथा पृथिव्यां बीजानि रत्नानि निधयो यथा ।
एवमात्मनि कर्माणि तिष्ठन्ति च विशन्ति च ॥
नित्यैर्ज्ञानं समासाद्य नरो बन्धात्प्रमुच्यते ।
धर्मात्सुखं च ज्ञानं च ज्ञानान्मोक्षोऽधिगम्यते ॥
अनू(नु)दका तु या संध्या वाक्कायक्लेशवर्जिता ।
संधिनी[3] सर्वभूतानां सा संध्या योगिनां स्मृता ॥
शून्यागारे गुहायां वा पर्वतेषु वनेषु च ।
तत्राऽऽसीनः प्रसन्नात्मा ध्यानं विधिवदाचरेत् ॥
निरू(रु)दका ध्यानसंध्या वाक्कायक्लेशवर्जिता ।
संधिनी सर्वभूतानां सा संध्या ह्येकदण्डिनाम् ॥

याज्ञवल्क्यः—ध्यानयोगेन संपश्येत्सूक्ष्म आत्माऽऽत्मनि स्थितः ।
[ अ० ३ । प्र० ४ । श्लो० ६३ ]

योगश्चित्तवृत्तिनिरोधः । आत्मैकाग्रता ध्यानम् । योगेन निदिध्यासनापरपर्यायेण । सूक्ष्मः प्राणशरीरादिव्यतिरिक्तः क्षेत्रज्ञः । आत्मनि ब्रह्मण्यवस्थित इत्येवं तत्त्वंपदार्थयोरभेदं सम्यक्पश्येदपरोक्षी कुर्यात् ।

लोहितार्कमुपासीत संध्यामातारकोदयात् ।
हृत्पद्मकोटरावासं चिन्मात्रज्योतिषं हरिम् ॥
ध्यायेन्नारायणं ह्यादौ त्रीन्कृत्वा प्राणसंयमान् ।
तावद्ध्यायेत्पुनर्यावन्निद्रावशमुपागतः ॥

१ क. ख. °भिन्नं पुरीषोद्गा° । २ ग. वनानतः । य° । ३ ख. संधानं ।

सुप्तोत्थितः पुनर्ध्यायेत्तिष्ठन्ध्यायेज्जपेत्पुनः ।
एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते ॥
दस्युभिर्मुषितेनैव[1] युक्तमाक्रन्दितं भृशम् ।
प्राग्रात्रे[2] पररात्रे च मध्यरात्रे समाहितः ॥
संध्यास्वपि विशेषेण चिन्तयेन्नित्यमीश्वरम् ।

इत्येवं शरीरावस्था ज्ञातव्या ।

अथ पर्यटनविधिः । अत्रिः—

हिमवद्विन्ध्ययोर्मध्ये ख्यातः पुण्यतमः श्रुतौ ।
देशः सरस्वतीतीरे नर्मदायास्तु पश्चिमे ॥
दग्धो वै वह्निना पूर्वं पवित्रीकरणाय वै ।
योगज्ञानतपोध्यानसिद्ध्यर्थं वै महात्मनाम् ॥
तस्मिन्देशे सदा भिक्षुः स्वधर्ममनुपालयन् ।
पर्यटेत्तु सदा योगी वीक्षयन्वसुधातलम् ॥
न रात्रौ न च मध्याह्ने संध्ययोर्नैव पर्यटेत् ।
न शून्ये न च दुर्गे वा प्राणबाधाकरे न च ॥
यत्र प्रभुर्भवेन्नाथस्तत्र[3] योगी वसेत्सदा ।
भिक्षार्थं प्रविशेद्ग्रामं वासार्थं वा दिनत्रयम् ॥
* एकरात्रं वसेद्ग्रामे पत्तने तु दिनत्रयम् ।
पुरे दिनद्वयं भिक्षुर्नगरे पञ्चरात्रकम् ॥
वर्षास्वेकत्र तिष्ठेत स्थाने पुण्यजलावृते ।
आत्मवत्सर्वभूतानि पश्यन्भिक्षुश्चरेन्महीम् ॥
अन्धवत्कुब्जवच्चापि बधिरोन्मत्तमूकवत् ।
नामगोत्रादिचरणं देशं वासं श्रुतं कुलम् ॥
वयो वृत्तं व्रतं[4] शीलं ख्यापयेन्नैव[5] सद्यतिः ।

विष्णुः—ग्रामान्ते निर्जने देशे नित्यवास[6]( सोऽ )निकेतनः ॥
पर्यटेत्कीटवद्भूमिं वर्षास्वेकत्र संवसेत् ।
वृद्धानामातुराणां च भिक्षूणां[7] सङ्गवर्जिनाम् ॥
ग्रामे वाऽथ पुरे वाऽपि वासो नैकत्र दुष्यति ।

---

* एतदर्ध न विद्यते क. पुस्तके ।

१ ग. °ितस्येह यु° । २ ग. प्रागग्रे प° । ३ ग. भगवान्ना° । घ. भवान्ना । ४ क. ख. बलं ।
५ ग. घ. °मेम कदाचन । ६ ख. नित्यकालनि° । ७ क. ख. भीरूणां ।

यमः—एकवासा अवासाश्च एकदृष्टिरलोलुपः ।
दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् ॥
सत्यपूतं वदेद्वाक्यं मनःपूतं समाचरेत् ।
अदूषयन्सतां मार्गं ध्यानासक्तो महीं चरेत् ॥

यमः—जले जीवा स्थले जीवा आकाशे जीवमालिनी ।
जीवमालाकुले लोके वर्षास्वेकत्र संवसेत् ॥

अत्रिः—द्वादश्यां पौर्णमास्यां वा कुर्यात्संकल्पमात्मवित् ।

आरुणी श्रुतिः—" वर्षासु ध्रुवशीलोऽष्टौ मासानेकाकी यतिश्चरेत् । द्वावेव वा चरेद्द्वावेव वा चरेत् " [ ख० ४ ] इति । कठश्रुतिः—" चतुरो मासान्वार्षिकान्ग्रामे नगरे वाऽपि वसेत् " इति । मेधातिथिः—

यावद्वर्षत्यकालेऽपि यावत्क्लिन्ना च मेदिनी ।
तावन्न विचरेद्भिक्षुः स्वधर्मं परिपालयन् ॥
कक्षोपस्थशिखावर्जमृतुसंधिषु वापयेत् ।
न त्रीनृतूनतिक्रामेन्न भिक्षुः संचरेत्क्वचित् ॥
वपनानन्तरं स्नायान्मृद्भिर्द्वादशभिर्यतिः ।
द्वादशैव प्रकुर्वीत क्षौरान्ते प्राणसंयमान् ॥
आषाढ्यां पौर्णमास्यां तु कारयेद्वपनं यतिः ।
चातुर्मास्यस्य मध्ये तु वर्जयेद्वपनं यतिः ॥

अथ क्षौरविधिः । अत्र संप्रदायविद्वचनानि—

गुरुं नत्वा शिरस्यम्भःक्षालनं तदनन्तरम् ।
आचम्य वाग्यतो यत्नात्सवासाः क्षौरमावपेत् ॥
अन्तर्धाय तृणं किंचित्तत्र निक्षेपयेद्यतिः ।
क्षुरं संदर्शनं चैव तथा नखनिकृन्तनम् ॥
अभिमन्त्र्य द्विषड्वारं प्रणवैः प्रोक्षयेज्जलम् ।
क्षुरमादाय तारेण श्मश्रुकेशान्निकृत्य च ॥
शिरोरुहांस्ततो नासास्थितांश्च प्रयतो यतिः ।
कारयेत्करपादस्थनखानां च निकृन्तनम् ॥
द्विषड्वारं निमज्ज्याप्सु तीरं गत्वोपविश्य च ।
प्रतिस्थानं द्विषड्वारं करावारभ्य पादयोः ॥

१ क. ख. मा:स्वेका° । २ ग. घ. गुरून्न° । ३ घ. °हान्श्मश्रुना° ।

मृदं दद्यान्मुखे चैव प्रतिवारं जलं तथा ।
ततो जलं प्रविश्याथ शिर आलिप्य सन्मृदा ॥
द्विषड्वारं निमज्ज्याथ प्रतिवारं मृदं तथा ।
पुनराप्लुत्य तत्तीरं गत्वा गण्डूषमाचरेत् ॥
पञ्चैकादशवारं च सम्यगाचम्य यत्नतः ।
प्राणायामांस्ततः कुर्यात्पञ्चैकादशसंख्यया ॥
क्षौरस्नानं यतीनां तु व्यासवर्यैः प्रकीर्तितम् ।

ततो मठमागत्य व्यूहपूजां कुर्यात् ।

अत्रिः—वपनानन्तरं स्नात्वा पूजयेत्पुरुषोत्तमम् ।
मनसा कर्मणा वाचा पूजयेच्च परात्परम् ॥

यतिधर्मसमुच्चये व्यासपूजाप्रकारः—
देवं कृष्णं मुनिं व्यासं भाष्यकारं गुरोर्गुरुम् ।
गुरुं देवं गणाध्यक्षौ दुर्गां देवीं सरस्वतीम् ॥

गणो गणेशः । अध्यक्षः क्षेत्रपालः । व्यूहः पुनस्त्रय (?) एव कृष्णव्यासभाष्यकाराणामेवं समाचरेत् । व्यूहत्वं च तत्परिवारयोगात् । परिवारश्च पुराणादिषु दृष्टः । तत्र कृष्णस्य[3] सनत्कुमारसनकसनन्दनसनत्सुजाताः । व्यासस्य सुमन्तुजैमिनिवैशंपायनपैलाः । भाष्यकारस्य पद्मपादविश्वरूपत्रोटकहस्तामलकाचार्याः । तत्र मध्ये कृष्णपञ्चकम् । तस्य दक्षिणतो व्यासपञ्चकम् । वामत आचार्यपञ्चकमिति । न्यायादाचाराच्च गुरुपरमगुरुपरमेष्ठिगुरुपरात्परगुरवोऽन्ये च ब्रह्मविदाचार्या यथासंनिवेशं भगवतः पुरतः पूज्याः । गणेश आग्नेये । इशान्ये क्षेत्रपालः । वायव्ये दुर्गा । नैर्ऋते सरस्वती । यथादिशं च लोकपालाः । भगवत्पार्श्वयोर्ब्रह्मरुद्रौ । अत्र च भगवान्मूलमन्त्रेण * पूजनीयः । अन्ये पुनः प्रणवादिभिर्नमोन्तैस्तत्तन्नाममन्त्रैः पूज्याः । एवं पूर्वोक्तप्रकारेण संपूज्य गोपीचन्दनादिमृत्तिकां दन्तकाष्ठदोरकादि दद्यात् ।

मेधातिथिः—प्रशस्तां मृत्तिकां शुक्लां गृह्णीयाच्छुचिशुक्रयोः ।
पूरणीं चतुरो मासानाषाढ्याः कार्तिकोदयात् ॥

वृद्धयाज्ञवल्क्यः—प्राग्वृष्टेर्मृदमादाय शुभ्रां किंचिदपीडयन् ।

* घ. पुस्तके समासे—अष्टाक्षरेण । इति ।

१ क. ख. घ. नरुत्प्लुत्य २ क. समुदाचारात् । ३ घ. स्य वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाः स° । ४ क. ख. ग. गुरवः । अ° ।

प्राग्वृष्टेरिति ज्येष्ठाषाढयोरित्यर्थः । अत्र[1] प्रथमत एव मृत्तिकासंग्रहो दन्तकाष्ठ[2]पत्रादीनामपि संग्रहप्रदर्शनार्थं हिंसापरिहारार्थत्वस्य[3] सर्वत्र समानत्वात् ।

अधिवास्य मृदं त्वेवं गृह्णीयाच्च शुभे दिने ।
स्मरन्यज्ञेश्वरं विष्णुं वाराहं[4] क्रोडरूपिणम् ॥
येनोद्धृताऽसि देवि त्वं क्रोडरूपेण दंष्ट्रया ।
त्वया सह समायातु[5] केशवो धरणीधरः ॥

ततः संकल्पं कुर्यात् । तथाचात्रिः—

असति प्रतिबन्धे तु मासान्वै वार्षिकानिह ।
निवसामीति संकल्प्य मनसा बुद्धिपूर्वकम् ॥
प्रायेण प्रावृषि प्राणिसंकुलं वर्त्म दृश्यते ।
आषाढ्यादिचतुर्मासं[6] कार्तिक्यन्तं तु संवसेत् ॥
माधवश्चतुरो मासान्सर्वभूतहिताय वै ।
स्वापं यास्यति शेषाङ्के लक्ष्म्या सह जगत्पतिः ॥
सुप्तश्चैवोत्थितो यावन्न भवेत्स सनातनः ।
अहं तावन्निवत्स्यामि सर्वभूतहिताय वै ॥

[*ततो ब्राह्मणाः—निवसन्तु सुखेनात्र गमिष्यामः कृतार्थताम् ।
यथाशक्त्या वयं पूजां करिष्यामो मुदाऽन्विताः ] ॥

अत्रिः—नासमानसहायेषु निवसेद्योगवित्क्वचित् ।
वसेत्समानशीलेषु सुशीलेषु तपस्विषु ॥

दक्षः—एको भिक्षुर्यथोक्तस्तु द्वावेव मिथुनं स्मृतम् ।
त्रयो ग्रामः समाख्यात ऊर्ध्वं तु नगरायते ॥
नगरं तु न कर्तव्यं ग्रामो वा मिथुनं तथा ।
एतत्त्रयं प्रकुर्वाणः स्वधर्माच्च्यवते यतिः ॥
वासे बहूनां कलहो भवेद्वार्ता द्वयोरपि ।
एक एव चरेत्तस्मात्कुमार्या इव कङ्कणः ॥
राजवार्ता दिवा तेषां भिक्षावार्ता परस्परम् ।
स्नेहपैशुन्यमात्सर्यं संनिकर्षात्प्रवर्तते ॥

---

* धनुश्चिह्नान्तर्गतं वचनं घ पुस्तक एव वर्तते ।

---

१ ख अतः प्र° । २ क. घ. °ष्ठपात्रा° । ३ क. °रिहारार्थत्वेऽस्य । ख. रिहणार्थत्वं तस्य ४ ख. वराहं । ५ ख स मां पातु । ६ ख. °मास्यं कार्तिक्यां तु समाचरेत् ।

निरामयं निराबाधं प्रसन्नसलिलान्वितम् ।
मेध्यान्यबहुलं चैव धनिनां कुलसंकुलम् ॥
भक्ता यत्र जनाः सर्वे स्ववृत्तिपरिपालकाः ।
श्रद्दधाना मुदा युक्ताः शान्ताः कल्याणवादिनः ॥
प्रयच्छन्ति यथान्यायं भिक्षां सर्वरसान्विताम् ।
भिक्षवे[1] पुष्कलं साधु यच्चान्यद्धर्मसाधनम् ॥
अयाचिता[2] नियच्छन्ति तं देशं यत्नतो व्रजेत् ।

वृद्धशातातपः—निगृहीतेन्द्रियग्रामो यत्र यत्र वसेद्यतिः ।
तत्र तत्र कुरुक्षेत्रं नैमिषं पुष्करं तथा ॥

अत्रिः—चतुरोऽयं वसेन्मासान्द्वौ वा कौशिक वार्षिकौ ।
वृद्धाननुक्रमेणैव नमस्कृत्य विधानतः ॥
अनेन विधिना भिक्षुरापाढ्यां सुसमाहितः ।
स्थानाभावाद्व्रजेत्तावद्यावद्भवति पञ्चमी ॥
प्रायश्चित्तेन युज्येत पञ्चम्यूर्ध्वं व्रजेद्यदि ।
कृच्छ्रमेकं चरेद्भिक्षुर्यदि ह्यार्तो न गच्छति ॥
तेषु मासेषु केशादीनृतुसंधौ न वापयेत् ।
नदीं च न तरेत्तेषु क्रोशादूर्ध्वं न च व्रजेत् ॥
वापयेद्यदि केशादीनुत्तरेद्यदि वा नदीम् ।
प्राजापत्यं चरेच्छुद्ध्यै प्राणायामशतत्रयम् ॥
विस्तीर्णे ग्रामसीमान्ते क्रोशादूर्ध्वं व्रजेद्यदि ।
प्राणायामांस्त्रिंशत्कृत्वा जपेच्चिकशतत्रयम् ॥
स्थितियोग्यान्बहून्ग्रामान्यदि वर्षासु लङ्घयेत् ।
प्रत्येकैकं चरेत्कृच्छ्रमेतत्पापात्प्रमुच्यते ॥
वर्षाभेदं यतिः कुर्याद्यदि कश्चिदनापदि ।
प्राजापत्येन कृच्छ्रेण मुच्यते नात्र संशयः ॥

अथ नमस्कारविधिः

आतुरं न नमेत्प्राज्ञ आतुरो न नमेत्तथा ।

अत्र संप्रदायविदः सर्वदा वन्दनं कुर्याद्गुरोर्ज्येष्ठयतेस्तथा ।
आपञ्चमीं नमस्कुर्यादतिक्रान्तेऽपि पर्वणि ॥
त्रिमुहूर्ताधिकं ग्राह्यं पर्व क्षौरप्रणामयोः ।

१ क. भिक्षां च पु॰ । ख. भिक्षां च पुष्कलां सा॰ । २ ख. ॰चितं प्रय॰ ।

यतिधर्मसमुच्चये—*प्रणतानां यतिर्ब्रूयादाशिषं व्यासशासनात् ।
नारायणेति च ब्रूयात्प्रणतायुर्विवृद्धये ॥
धर्मसंकरसंकीर्णे स्थाने सोपद्रवे यतिः ।
मुहूर्तं नोपतिष्ठेत यत्र धर्मः पराङ्मुखः ॥
तस्करोपद्रुते ग्रामे ब्रह्महत्यादिदूषिते ।
दुर्भिक्षे राष्ट्रभङ्गे वा वर्षास्वप्याशु तं त्यजेत् ॥

अत्रिः—पिता माता स्वसा भ्राता स्नुषा जाया सुतस्तथा ।
ज्ञातिबन्धुसुहृद्वर्गो दुहिता तत्सुतादयः ॥
यस्मिन्देशे वसन्त्येते न तत्र दिवसं वसेत् ।
द्वेषः शोको भवेत्तत्र रागहर्षादयो मलाः ॥
अश्रुपातं यदा कुर्याद्भिक्षुः शोकेन चार्दितः ।
योजनानां शतं गत्वा तदा पापात्प्रमुच्यते ॥

दक्षः—[2]कथाचारे खले सार्थे पुरे गोष्ठे त्वसद्गृहे ।
निवसेन्न यतिः षट्सु स्थानेष्वेतेषु कर्हिचित् ॥

वृद्धयाज्ञवल्क्यः—चौरैरुपद्रुतं देशं दुर्भिक्षं व्याधिपीडितम् ।
चक्रेणान्येन च क्रान्तं वर्षास्वप्याशु तं त्यजेत् ॥
मुहूर्तमपि नाऽऽसीत देशे सोपद्रवे यतिः ।
उपद्रुते तु मनसि समाधिर्नैव जायते ॥
अधार्मिकनृपग्रामे पाखण्डजनसंकुले ।
मुहूर्तमपि नाऽऽसीत यत्र धर्मो विलुप्यते ॥
चतुष्क्रोशान्तरा यत्र नदी भवति कुत्रचित् ।
पक्षान्ते तत्र गन्तव्यमापस्तम्बवचो यथा ॥
श्राद्धे निमन्त्रितो गच्छेन्नदीलङ्घनवर्जितम् ।
सायमागत्य निवसेत्स्वाश्रमे कल्पिते गृहे ॥
यत्तीर्थमनुसंप्राप्य चित्तमस्य प्रसीदति ।
तत्र तिष्ठेन्नरो विद्वान्मोक्षमार्गे व्यवस्थितः ॥
चातुर्मास्ये च कार्तिक्यां क्षौरं कार्यं न चान्तरा ।
देशका[3]लाविरोधेन भाद्रामपि क्वचिन्मतम् ॥

* घ. पुस्तके समासे—प्रणामं न यतिर्ब्रूयात् ।

१ ख. °संस्कार° । २ ख. अन्याचारे । ३ ग. घ. °कालवि° ।

अत्रिः—कार्तिक्यां वापयित्वा तु स्नापयित्वा त्रिविक्रमम् ।
परस्परं[1] तु संपूज्य क्षामयित्वा परस्परम् ॥
मासद्वयं चतुष्कं वा एकत्र निवसेद्यतिः ।
नैकत्र निवसेद्ग्रामे वर्षाभ्योऽन्यत्र सद्यतिः ॥
चतुरोऽयं वसेन्मासान्द्वौ वा कौशिक वार्षिकौ।*
कक्षोपस्थशिखावर्जमृतुसंधिषु वापयेत् ॥

ऊर्ध्वं वार्षिकाभ्यां मासाभ्यां नैकत्र स्थानवासी स्यात् । इति शङ्ख-स्मृतिः । इत्युदाहृतवचनेभ्यो मासद्वयं चतुष्टयं वैकत्र ग्रामादौ निवसेत्। मासद्वयं यदा तदा भाद्र्यां क्षौरं कारयेत् । भाद्र्यामपि क्वचिन्मतमिति वचनात् । यदा मासचतुष्टयं तदा नान्तरा वपनं कुर्यात् ।

चातुर्मास्ये च कार्तिक्यां क्षौरं कार्यं न चान्तरा ॥ इति वचनात् ।
मासत्रयेण तु यदा ऋतुर्भवति वै द्विज ।
तदा क्षौरद्वयं कार्यमिति शास्त्रस्य निर्णयः ॥
अधिमासो यदा विप्र तदा क्षौरद्वयं भवेत् ।
मासद्वयेन प्रथमं मासैकेन तथाऽपरम् ॥
वाराणस्यां तु गौतम्यां सर्वदैकत्र संवसेत् ।
मासद्वये यतीनां च विधवा चार्धमासके ॥
नित्यं नैमित्तिकं कार्यं वपनं शुद्धिदं भवेत् ।
कालप्राप्तं न कुर्वीत प्राजापत्यं दिने दिने ॥

[+त्रिस्थलीसेतावपरार्के वपनक्रियायां विशेषो दर्शितः—
उदङ्मुखः प्राङ्मुखो वा वपनं कारयेत्सुधीः ।
केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेत् ॥
दक्षिणं कर्णमारभ्य धर्मार्थे पापसंचये ।
शिखाद्यं नवसंस्कारे शिखाद्यन्तं शिरो वपेत् ॥

तीर्थादिवपने दक्षिणं कर्णमारभ्योदक्संस्थं वापयेत् । पापनिमित्तके शिखाप्रान्तदेशमादीकृत्याधस्तात्सर्वतो वपेन्नोदक्संस्थम् । चूडाकरणादौ दक्षिणकर्णमारभ्य शिखान्तं शिखामारभ्य वामकर्णान्तं च वपेत् । ]

* इतउत्तरमयं ग्रन्थः ख. पुस्तके—श्रवणार्थी सदा तिष्ठेदुपकुर्वाणवद्गृहे । न दुष्येत्तस्य तत्ख्यानं प्रवासे चाग्रविद्यया । + धनुश्चिह्नान्तर्गतग्रन्थो घ. पुस्तक एव वर्तते ।

1 ग. घ. °रं पूजयित्वा क्षा° ।

पञ्च क्षौराणि भिक्षूणां भवन्ति ऋतुसंधिषु ।
प्रावृडन्ते तु तत्कार्यं शंकराचार्यसंमतम् ॥
हरेर्बोधे प्रकर्तव्यं न्यासं क्षौरं तथाऽटनम् ।
अबोधे न पुनः कार्यं संकटे तु यथासुखम् ॥

वाराणस्यां गङ्गाकूले वा सर्वदाऽप्येकत्र निवसेत्तथा च मत्स्यस्कन्दपुराणयोः—

अष्टौ मासान्विहारः स्याद्यतीनां संयतात्मनाम् ।
एकत्र चतुरो मासान्वार्षिकान्निवसेत्पुनः ॥
अविमुक्ते प्रविष्टानां विहारस्तु न विद्यते ।
न देहो भविता तत्र दृष्टं शास्त्रं पुरातनैः ॥
मोक्षोऽप्यसंशयं तत्र पञ्चत्वं तु गतस्य वै ।
हन्यमानोऽपि यो विद्वान्सेवेद्विघ्नशतैरपि ॥
स याति परमं स्थानं यत्र गत्वा न शोचति ।
गङ्गाकूले वसेन्नित्यं भिक्षुर्मोक्षपरायणः ॥
सिद्धक्षेत्रं तु तज्ज्ञेयं यावद्धनुःशतत्रयम् ।

भविष्ये—ब्रह्मादिदेवलोकानां मुक्तेश्च प्राप्तये नृणाम् ।
गङ्गैव परमो हेतुः कलिकाले विशेषतः ॥
ब्राह्मणस्य हि देहोऽयं नोपभोगाय जायते ।
इह क्लेशाय महते प्रेत्यानन्तसुखाय च ॥

याज्ञवल्क्यः—इत्येतदस्थिरं वर्ष्म यस्य मोक्षाय कृत्यसौ ।
तत्त्वस्मृतेरुपस्थानात्सत्त्वयोगात्परिक्षयात् ॥
कर्मणां संनिकर्षाच्च सतां योगः प्रवर्तते[अ० ३ प्र० ४ श्लो० १५९] ।

बृहस्पतिः—बन्धमोक्षविभागज्ञो बन्धाच्चेन्मोक्षणेच्छया ।
उपायान्वेषणे युक्तः को न मुच्येत बन्धनात् ॥

अथाभ्यागताचारः—

अभ्यागते यतौ स्थायी यतिलिङ्गेन शिष्टताम् ।
विज्ञायास्योत्थितो भूत्वा वामवस्त्रादिसंयुतः ॥
चातुर्मास्यं कियदिति पृष्ट्वा तेनोत्तरे कृते ।
अभ्यागतो यदि ज्येष्ठस्तस्मै भक्त्याऽभिवन्द्य च ॥

१ घ. 'मुक्तप्र' ।

तस्य दण्डमधो धृत्वा तेन[1] त्यक्तं यथाविधि ।
योग्ये देशे तु संस्थाप्य तस्मा आसनमादरात् ॥
दत्त्वोपविष्टे तस्मिन्स गरुडासनसंस्थितः ।
तदनुज्ञां गृहीत्वाऽथ पञ्चाङ्गं नतिपूर्वकम् ॥
अभ्यागतप्रयुक्तं[2] तत्पादग्रहणमादरात् ।
यथोपदेशं कृत्वा स तत्पादौ मूर्ध्नि धारयन् ॥
आघ्राय दक्षिणांसे तु धारयित्वा ततः सुधीः ।
गरुडासन आसीनो जोटिकार्चनपूर्वकम् ॥
अनुज्ञायास्य पञ्चाङ्गं नमस्कारपुरःसरम् ।
गृहीत्वा पूर्ववत्पादावस्याष्टाङ्गनमस्क्रियाः ॥
तदनुज्ञानुसारेण त्रिपञ्चद्वादशसंख्यया ।
जोटिमादाय विधिवत्कर्णयोर्धारयेत्पुनः ॥
विधायैकनस्कारं तां गृहीत्वा यथाविधि ।
पञ्चाङ्गेन प्रणम्याथ गरुडासनमास्थितः ॥
क्षमा[3]र्प[4]य्य यथादेशं शौचं पर्यङ्कमाचरेत् ।
अभ्यागतः कनिष्ठश्चेत्तेन स्थाय्यभिवन्दितः ॥
गृहीत्वा तस्य दण्डाग्रं पूर्ववत्स्थापयेत्ततः ।
स्थायी स्वासन आसीनः शिष्यद्वाराऽऽसनं शुचि ॥
तस्मै दद्यात्ततस्तत्तु मूर्ध्न्यादाय निधाय च ।
अभ्यागतेन भूमौ तु स्थिते गरुड आसने ॥
प्रार्थिते वै प्रणामार्थं स्थाय्यनुज्ञां विधाय सः ।
अभ्यागतेनार्धमुक्तकटिवस्त्राग्रसंयुतम् ॥
द्विगुणीकृतवस्त्रं तु ऊर्वोरुपनिधाय च ।
यथोपदेशं पञ्चाङ्गनमस्कारे कृते सति ॥
उत्थाय तस्य स्कन्धादिग्रहणं विधिना चरेत् ।
स्वासने संविशेद्भूयः स उत्थाय द्वितीयकम् ॥
वस्त्रं निक्षिप्य वस्त्रेण सम्यग्[5]मुक्तेन संयुतः ।
अभिवन्द्योपविश्याऽऽशु गरुडासनपूर्वकम् ॥
प्रणामादि यथापूर्वं कृत्वा गरुड आसने ।
उपविश्याञ्जलिं कृत्वा भक्तियुक्तो भवेत्तदा ॥

१ ग. तेन त्यक्त्वा य°। घ. तेनेत्युक्तं य°। २ ग. क्तं तु पा°। ३ ग. °माप्यते य°
४ घ. °पयेद्यथा°। ५ ख. °म्यग्युक्ते°।

स्थायी तु स्वसमीपे तं स्थापयित्वा सुखासने ।
अभ्यागतप्रयुक्तं तत्पादग्रहणमादरात् ॥
कारयेत्स्वसमीपस्थैस्तत्कनिष्ठैर्यथाविधि ।
जोटीनमस्कृतिं[1] तद्वत्पर्यङ्कं शौचमप्यथ ॥
तद्दिने तस्य भिक्षादि यथाशक्ति विचारयेत् ।
इत्यभ्यागताचारः ।

अथ पर्यङ्कशौचविधिः—

वामेऽभ्यागतपादाभ्यां स्वहस्तार्थं तु दक्षिणे ।
मृद्विभागं विभज्याथ गरुडासनमास्थितः ॥
पादयोस्तु मृदः पञ्च चतस्रस्तिस्र एव च ।
द्वे चैकां च मृदं दद्याज्जानुजङ्घादितः क्रमात् ॥
करयोर्दश सप्ताऽऽदौ द्वितीये सप्त पञ्च च ।
तृतीये पञ्च तिस्रश्च तिस्रो द्वे च चतुर्थके ॥
द्वे चैकां च मृदं दद्याच्छौचे पर्यङ्कसंज्ञके ।

[ *अस्यार्थः—जान्वोः ५ । वामहस्ते १० । उभयोः ७ इति प्रथमशौचे । जङ्घयोः ४ । वामहस्ते ७ । उभयोः ५ । इति द्वितीये । गुल्फयोः ३ । वामहस्ते ५ । उभयोः ३ । इति तृतीये । पादपृष्ठयोः २ । वामहस्ते ३ । उभयोः २ । इति चतुर्थे । पादाङ्गुलीषु १ । वामहस्ते २ । उभयोः १ । इति पञ्चमे । ततः पादौ मृदा त्रिः प्रक्षाल्येति । ]

अथ योगपट्टविधिः । तत्र संप्रदायविदः—

अधीतविद्यः सभ्यश्चेद्दद्याद्योगपटं गुरुः ।
पादौ मृदा त्रिः प्रक्षाल्य पादुकाभ्यां गृहं व्रजेत् ॥
द्विगुणं कटिसूत्रं च बद्ध्वा वासोऽवगुण्ठ्य च ।
उच्चासनं प्रकल्प्योपविशेत्तत्राऽऽज्ञया गुरोः ॥
सभ्यादिष्टमुपन्यस्य वेदान्ते किंचिदेव तु ।
गुरुणा विधिवन्न्यासपूर्वं शङ्खाभिषेचनम् ॥
वासो माल्यादिकं दत्त्वा गुरुणा यतिभिः सह ।
नमस्कृत्य प्रपूज्याथ[2] स्तोत्राणि च पठेत्तथा ॥

* धनुश्चिह्नान्तर्गतग्रन्थः क. पुस्तक एव ।

1 ख. °स्कृतं त° । ग. °स्कृतस्त° । २ ख. प्रजप्याथ ।

वस्त्रं चोपरि संधार्य बन्धुभिर्यतिभिः सह ।
गीताध्यायं विश्वरूपं भुङ्क्ष्व राज्यान्तमेव च ॥
ततो नाम प्रकर्तव्यं गुरुणा सर्वसंमतम् ।
तीर्थाश्रमवनारण्यगिरिपर्वतसागराः ॥
सरस्वती भारती च पुरी नामानि[1] वै दश ।
श्रीपादसंज्ञया वाच्यं नाम तस्य यथातथम् ॥
अद्याऽऽरभ्य त्वया कार्यं दीक्षाव्याख्यादिकं सदा[3] ।
योगपट्टोऽपि दातव्यः शिष्ये सम्यक्परीक्षिते ॥
इत्याज्ञां गुरुणा दत्तां गृहीत्वा शिरसा स्वयम् ।
उत्थाय च ततः सम्यक्कुर्यात्पादग्रहान्वितम् ॥
सदोरकं नमस्कुर्याद्गुरुं ज्येष्ठयतींस्तथा । इति ।

इति योगपट्टविधिः ।

आगतं स्वाश्रमे भिक्षुं प्रत्युत्थायाभिवाद्य च ।
विश्राम्य गुरुवद्भक्त्या पूजयेत्तद्दिने यतिः ॥

अथ निषिद्धानि—

नामगोत्रादिचरणं देशं कालं श्रुतं कुलम् ।
वयोवृत्तं व्रतं शीलं ख्यापयेन्नैव सद्यतिः ॥

वायुपुराणे—द्वावेतौ समवीर्यौ तु सुरा ताम्बूलमेव च ।
तस्मात्सर्वप्रयत्नेन ताम्बूलं वर्जयेद्यतिः ॥

व्यासः—मा ददस्वेति यो ब्रूयाद्गव्यग्नौ ब्राह्मणेषु च ।
श्वानयोनिशतं गत्वा चाण्डालेष्वपि[4] जायते ॥
यः प्रवृत्तां श्रुतिं सम्यक्शास्त्रं वा ऋषिभाषितम् ।
दूषयेदनभिज्ञो यः स भवेद्ब्रह्मघातकः ॥
यतीनां काञ्चनं दत्त्वा ताम्बूलं ब्रह्मचारिणाम् ।
चौराणामभयं दत्त्वा दाताऽपि नरकं व्रजेत् ॥

दशविधां हिंसां न कुर्यात् । उद्वेगजननं संतापजननं रुजाकरणं शोणितोत्पादनं पैशुन्यकरणं सुखापनयनमतिक्रमः संरोधो निन्दा बन्ध इति ।

१ क. ख. नामयतेदं° । २ ख. °थाक्रमम् । अ° । ३ ग. तथा । ४ ग. घ. °लेष्वेव जा° ।

द्वाविमौ न विराजेते विपरीतेन कर्मणा ।
निरारम्भो गृहस्थश्च कार्यवांश्चैव भिक्षुकः ॥
यत्यन्नं न तु भोक्तव्यं प्राणैः कण्ठगतैरपि ।
गोमांससदृशं ज्ञेयं सुराबिन्दुसमं जलम् ॥
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥
माद्यति प्रमदां दृष्ट्वा सुरां पीत्वा च माद्यति ।
तस्माद्दृष्टमदां नारीं दूरतः परिवर्जयेत् ॥
न पाणिपादचपलो न नेत्रचपलो द्विजः ।
न च वाक्चपलश्चैव इति शिष्टस्य लक्षणम् ॥
ज्वलितस्य वने वह्नेर्दावदग्धा[1] न संस्थितिः (?) ।
सर्पस्य वाऽथ चौरादेः सिंहव्याघ्रादिकस्य च ॥
भयान्न संत्यजेन्मार्गं भयाद्यतिर्विनश्यति ।
मोक्षं गच्छत्यसौ विप्रो निर्भयो यस्त्वसंग्रहः ॥

आरुणी श्रुतिः—"कामक्रोधलोभमोहदम्भदर्पासूयाममत्वाहंकारानृतादीनपि त्यजेत्" [ ख०४ ]। "अत ऊर्ध्वममन्त्रवदाचरेत् । ऊर्ध्वगमनं विसृजेत् ।" [ आरु०ख०२ ] काठकब्राह्मणम्—"संन्यस्याग्नीन्न पुनरावर्तयेन्मां[2] मन्युं जायामावाहयेत्" इति । परमहंसोपनिषदि—"सौवर्णादीनां[3] नैव परिग्रहेत् । यस्माद्भिक्षुर्हिरण्यं रसेन दृष्टं[4] च स ब्रह्महा भवेत् । यस्माद्भिक्षुर्हिरण्यं रसेन स्पृष्टं[5] च स पौल्कसो भवेत् । यस्माद्भिक्षुर्हिरण्यं रसेन ग्राह्यं[6] च स आत्महा भवेत् । तस्माद्भिक्षुर्हिरण्यं रसेन न दृष्टं च न स्पृष्टं न च ग्राह्यं च । सर्वे कामा मनोगता व्यावर्तेत[7] । दुःखे नोद्विग्नः सुखे न स्पृहा त्यागो रागे सर्वत्र शुभाशुभयोरनभिस्नेहो न द्वेष्टि न मोदं च । सर्वेषामिन्द्रियाणां गतिरुपरमते य आत्मन्येवावस्थीयते यत्पूर्णानन्दैकबोधस्तद्ब्रह्माहमस्मीति कृतकृत्यो भवति कृतकृत्यो भवति" [ ख०४ ]। मेधातिथिः—

[*आसनं पात्रलोपश्च संचयः शिष्यसंग्रहः ।
दिवा स्वापो वृथाऽऽलापो यतेर्बन्धकराणि षट् ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. पुस्तक एव वर्तते ।

१ ग. °ग्धासनं स्थि° । २ घ. मामन्यं जा° । ग. मापलं जा° । ३ क. °दीनैव । ४ ग. घ. °ष्टं चेत्स° । ५ ग. घ °ष्टं चेत्पौ° । ६ ग. घ ह्यं नःसं° । ७ क. °तेन्दुःखे ।

एकाहात्परतो ग्रामे पञ्चाहात्परतः पुरे ।
वर्षाभ्योऽन्यत्र तत्स्थानं मासेन तदुदाहृतम् ॥
उक्तानां यतिपात्राणामेकस्यापि न संग्रहः ।
भिक्षोर्भैक्षभुजस्यापि पात्रलोपः स उच्यते ॥
गृहीतस्य त्रिदण्डादेर्द्वितीयस्य परिग्रहः ।
कालान्तरोपभोगार्थं संचयः परिकीर्तितः] ॥
शुश्रूषालाभपूजार्थं यशोर्थं वा परिग्रहः ।
शिष्याणां न तु कारुण्यात्स ज्ञेयः शिष्यसंग्रहः ॥
विद्या दिनं प्रकाशत्वादविद्या रात्रिरुच्यते ।
विद्याभ्यासे प्रमादो यः स दिवा स्वाप उच्यते ॥
आध्यात्मिकीं कथां मुक्त्वा भिक्षायाच्ञासुरस्तुतिम् ।
अनुग्रहं[1] पथिप्रश्नं वृथाजल्पोऽन्य उच्यते ॥

हारीतः—पण्डितस्यापि शूद्रस्य शास्त्रज्ञानरतस्य च ।
वचनं तस्य न ग्राह्यं शुनोच्छिष्टं हविर्यथा ॥
श्वचर्मणि यथा क्षीरमपेयं ब्रह्मवादिभिः ।
तथा शूद्रमुखाद्वाक्यं न श्रोतव्यं कदाचन ॥

बह्वृचपरिशिष्टे—यो भवेत्पूर्वसंन्यासी तुल्यो वै *धर्मतो यदि ।
तस्मै प्रणामः कर्तव्यो नेतराय+ कदाचन ॥

अत्रिः—छेदभेदोपमर्दं च प्राकारं गृहमाश्रमम् ।
स्वाहा स्वधा वषट्कारो विषयाणां च संनिधिः ॥
स्तुतिनिन्दाक्रियावादाः पर[2]धर्मावघट्टनम् ।
तृष्णा क्रोधोऽनृतं माया लोभमोहौ प्रियाप्रिये ॥
शिल्पं[3] व्याख्या नियोगश्च कामो रागः परिग्रहः ।
अहंकारो ममत्वं च चिकित्सा धर्मसाहसम् ॥
प्रायश्चि[4]त्तप्रदानं च मन्त्रौषधगदाशिषः ।
एकान्नं मदमात्सर्यं गन्धपुष्पविभूषणम् ॥

* घ. पुस्तके समासे—धर्मत इति । धर्मश्चाऽऽत्मविषयकश्रवणमननादिरेव संन्यासानन्तरं तस्यैवानुष्ठेयत्वात् । इति + नेतराय संन्यासपूर्वकश्रवणादिधर्मरहिताय संन्यासिने प्रणामो न कर्तव्य इत्यर्थः ।

१ ख. °हं प्रतिप्र° । २ ख. °रधर्मावधानता । ३ ग. शिल्पव्या° । ४ ग. श्चित्तं तथा दानं म° ।

ताम्बूलाभ्यञ्जने क्रीडा भोगाकाङ्क्षा रसायनम् ।
कत्थनं कुत्सनं स्वस्ति ज्योतिषं क्रयविक्रयौ ॥
क्रिया कर्मविवादाश्च गुरुवाक्यविलङ्घनम् ।
संधिश्च विग्रहो यानं मञ्चकः शुक्लवाससम् (?) ॥
शुक्रोत्सर्गो दिवास्वापो भिक्षाधारस्तु तैजसः ।
विषं चैवाऽऽयुधं बीजं हिंसां चेक्षादिमैथुनम् ॥
प्रतिषिद्धानि चैतानि सेवमानो व्रजत्यधः ।
भैक्षदे[2]शनृपज्ञातिपुत्रमित्रादियोषिताम् ॥
उप[3]चारकथास्वन्यो मनसाऽपि न चिन्तयेत् ।
आगच्छ गच्छ तिष्ठेति स्वागतं सुहृदेऽपि वा ॥
सन्माननं न च ब्रूयान्मुनिर्मोक्षपरायणः ।
न स्नानमाचरेद्भिक्षुः पुत्रादिनिधने श्रुते ॥
पितृमातृक्षयं श्रुत्वा स्नात्वा शुध्यति साम्बरः ।
न कुर्यात्सूतकं भिक्षुः श्राद्धपिण्डोदकक्रियाम् ॥
त्यक्तं संन्यासयोगेन गृहधर्मादिकं व्रतम् ।
गोत्रादिचरणं सर्वं पितृमातृकुलं धनम् ॥

वायुपुराणे—दण्डं प्रदर्शयेद्भिक्षुर्गयां गत्वा न पिण्डदः ।
दण्डं विष्णुपदे स्पृष्ट्वा पितृभिः सह मुच्यते ॥
गयायां मुण्डपृष्ठे च कूपे यूपे व[4]टे तथा ।
दण्डं प्रदर्शयेद्भिक्षुः पितृभिः सह मोदते ॥

विष्णुः—संभाषणं सह स्त्रीभिरालापप्रेक्षणे तथा ।
नृत्यं गानं सभासेवापरिवादांश्च वर्जयेत् ॥

मेधातिथिः—न संभाषेत्स्त्रियं कांचित्पूर्वदृष्टां न च स्मरेत् ।
कथां च वर्जयेत्तासां न पश्येल्लिखितामपि ॥
एतच्चतुष्टयं मोहात्स्त्रीणामाचरतो यतेः ।
चित्तं विक्रियतेऽवश्यं तद्विकारात्प्रणश्यति ॥
सुजीर्णोऽपि सुजीर्णासु विद्वान्स्त्रीषु न विश्वसेत् ।
सुजीर्णास्वपि कन्थासु सज्जते जीर्णमम्बरम् ॥

१ ख. °सातैक्ष्ण्यातिमै° । २ क. देहनृ° । ३ क. ख. °पकारकथास्त्वन्या म° । ४ ग. तटे ।

क्रतुः—अर्थशय्यासनानां तु वाक्यस्पर्शनभाषणैः ।
याजनाध्यापनव्याख्यावस्त्रभाण्डपरिग्रहैः ॥
मिथुनेक्षणसंकल्पैः संकराः स्युर्यतेः सदा ।

मेधातिथिः—स्थावरं जङ्गमं बीजं तैजसं विषमायुधम् ।
षडेतानि न गृह्णीयाद्यतिर्मूत्रपुरीषवत् ॥
रसायनक्रिया वादो ज्योतिषं क्रयविक्रयम् ।
विविधानि च शिल्पानि वर्जयेत्परदारवत् ॥

दक्षः—भयं प्राणान्तिकं मुक्त्वा विण्मूत्रोत्सर्ग एव च ।
नान्यत्र विचरेद्रात्रौ न मध्याह्ने न संध्ययोः ॥

मनुः—नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः ।
जानन्नपि हि मेधावी जडवल्लोकमाचरेत् ॥

बृहस्पतिः—नैवाऽऽददीत पाथेयं यतिः किंचिदनापदि ।
पक्वमापत्सु गृह्णीयाद्यावदह्नोपभुज्यते ॥
पाथेयमेकरात्रस्य पानीयं दुर्गमे पथि ।
गृह्णीयान्नाधिकं चान्नं भेषजं तु यथेच्छया ॥

विष्णुपुराणे—जरायुजाण्डजादीनां वाङ्मनःकर्मभिः क्वचित् ।
युक्तः कुर्वीत न द्रोहं सर्वसङ्गांश्च वर्जयेत् ॥

अत्रिः—न चैकस्मिन्वसेद्ग्रामे न चैकस्मिन्सरित्तटे ।
शून्यागारे न चैकस्मिन्वसेच्छून्यालये तथा ॥
लोकयात्रां प्रयत्नेन वर्जयेदात्मचिन्तकः ।
नान्योपनिषदं विद्यामभ्यसेन्मुक्तिहेतुकीम् ॥
ग्रासादाच्छादनादन्यन्न गृह्णीयात्कथंचन ।
यावदाहारयेत्तावत्प्रतिगृह्णीत नान्यथा ॥
परार्थं न प्रतिग्राह्यं न च दद्यात्कथंचन ।
दैन्यभावात्तु भूतानां संविभागं यतिश्चरेत् ॥

क्रतुः—नीरुजश्च युवा चैव भिक्षुर्नाऽऽवसथे वसेत् ।
स दूषयति तत्स्थानं वृद्धान्पीडयतीति च ॥

मनुः—अतिवादांस्तितिक्षेत नावमन्येत कंचन ।
न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥

१ क. ग. °यनं क्रि° ।

क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् ।
सप्तद्वारावकीर्णां च न वाचमनृतां वदेत् [ अ० ६।श्लो० ४७।४८ ]

अत्रिः—पक्वं वा यदि वाऽपक्वं पाचयेद्यः क्वचिद्यतिः ।
स्वधर्मस्य तु लोपेन तिर्यग्योनिं व्रजेद्यतिः ॥

जाबालः—अन्नदानपरो भिक्षुर्वस्त्रादीनां परिग्रही ।
उभौ तौ मन्दबुद्धित्वात्पूतीनरकशायिनौ ॥

वायुपुराणे—यस्तु प्रव्रजितो भूत्वा पुनः सेवेत मैथुनम् ।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥
शून्यागारेषु घोरेषु आखुर्भवति दारुणः ।
स तिर्यक्स्यात्ततो गृध्रः श्वा वै द्वादश वत्संरान् ॥
खरो विंशतिवर्षाणि दश वर्षाणि सूकरः ।
अपुष्पोऽफलितो वृक्षो जायते कण्टकान्वितः ॥
ततो दावाग्निना दग्धः स्थाणुर्भवति कामुकः ।
स्थावराच्च परिभ्रष्टो योनिमन्यां स गच्छति ॥
पूर्णे वर्षसहस्रान्ते जायते ब्रह्मराक्षसः ।
क्षुत्पिपासापरिश्रान्तः क्रव्यादो रुधिराशनः ॥
चाण्डालगर्भसंभूतो जायते नात्र संशयः ।
क्रमेण लभते मोक्षं कुलस्योत्सादनेन च ॥

अङ्गिराः—न तीर्थसेवी नित्यं स्यान्नोपवासपरो यतिः ।
न चाध्ययनशीलः स्यान्न व्याख्यानपरो भवेत् ॥
न किंचिद्भक्षयेद्रात्रौ न चान्यद्दन्तधावनात् ।
विना भोजनकाले तु भक्षयेदात्मवान्यतिः ॥
यतिधर्मविहीनस्तु संसारान्नातिवर्तते ।
हर्षक्रोधौ न कुर्वीत मनःपूतं समाचरेत् ॥
प्रतिग्रहं न गृह्णीयान्नैव वाऽन्यं प्रदापयेत् ।
प्रेरयेद्वा तथा भिक्षुः स्वप्नेऽपि न कदाचन ॥

विष्णुः—वानप्रस्थगृहस्थाभ्यां प्रीतिं यत्नेन वर्जयेत् ।

दत्तात्रेयः—जायाभ्रातृसुतादीनां बन्धूनां च शुभाशुभम् ।
श्रुत्वा दृष्ट्वा न कम्पेत शोकहर्षौ त्यजेद्यतिः ॥

---

१ ग. घ. °बुद्धी स्यात्पू° । २ ग. घ. °त्सराः । ख° ।

हारीतः—छेदने भेदने पाके यतिर्यस्तु प्रवर्तते ॥
ताहृशं कश्मलं दृष्ट्वा प्रेताशौचं विधीयते ।
तिलधान्यहिरण्यं च गोभूदासीगृहादिकम् ॥
तदादाय निषिद्धं तु योऽश्नुते[1] तं त्यजेद्यतिः ।
स साधुभिर्बहिष्कार्यः स्मृतोऽसौ पतितो यतिः ॥
तं दृष्ट्वा भिन्नमर्यादं स्नानं कुर्यात्सहाम्बरम् ।
अङ्गिराः—संन्यासं चैव यः कृत्वा पुनरुत्तिष्ठते द्विजः ।
न तस्य निष्कृतिः कार्या स्वधर्मात्प्रच्युतस्य च ॥
विष्णुः—आरूढो नैष्ठिकं धर्मं पुनरावर्तयेद्यदि ।
आरूढपतितो ज्ञेयः सर्वधर्मबहिष्कृतः ॥
स निन्द्यः सर्वभूतानां पितृघ्नश्चैव जायते ।
चाण्डालाः प्रत्यवसिताः परिव्राजकतापसाः ॥
तेषां जातान्यपत्यानि चाण्डालैः सह वासयेत् ।
नैष्ठिकानां वनस्थानां यतीनामवकीर्णिनाम् ॥
शुद्धानामपि लोकेऽस्मिन्प्रत्यापत्तिर्न विद्यते ।

बहिस्तूभयथा वाऽपि स्मृतेराचाराच्चोभयथाऽपि कृतप्रायश्चित्ता अकृतप्रायश्चित्ताश्चैते सद्भिः सहाध्ययनाशनादिव्यवहारानर्हा एव । कुतः । यतः—

प्रायश्चित्तैर्निरस्येत पारलौकिक्यशुद्धता[2] ।
नैहिकी वचनाद्[3]न्यायबाधो बालवधादिवत् ॥
मनुः—बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः ।
शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवदेत् ॥ इति ।

न भोजनादिसर्वव्यवहारमाचरेदित्यर्थः ।

आविकं त्वधिकं वस्त्रं तूलीं तूलपटीं तथा ।
प्रतिगृह्य यतिश्चै[4]तान्पतते नात्र संशयः ॥
[*ऊर्णाकीटोद्भवं वस्त्रं कस्तूरीरोचनं तथा ।
वर्जनीयं प्रयत्नेन स्पृष्ट्वा चान्द्रायणं चरेत् ॥

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. पुस्तके वर्तते ।

१ ख. ग. घ. °ते न स°। २ ग. °किकशु° । ३ घ. °चनन्याय°। ४ ग. घ. श्चैव प°।

ग्राह्यं कार्पासजं वस्त्रं काषा(शा)युक्तमयाचितम् ।
अन्यद्वस्त्रं त्यजेद्योगी यदीच्छेदात्मनो हितम् ॥ ]
उत्तमां वृत्तिमाश्रित्य पुनरावर्तयेद्यदि ।
आरूढपतितो ज्ञेयः सर्वधर्मबहिष्कृतः ॥
बह्वृचपरिशिष्टे—पतत्यसौ ध्रुवं भिक्षुर्यस्य भिक्षोर्द्वयं भवेत् ।
धीपूर्वं रेतउत्सर्गो द्रव्यसंग्रह एव च ॥
काञ्चनं च तिला गावो भूमिधान्यधनं स्त्रियः ।
प्रतिगृह्य यतिश्चैतान्पतते नात्र संशयः ॥
भूमिर्गावो हिरण्यं च यतेर्यस्य परिग्रहः ।
तादृशं कश्मलं दृष्ट्वा सचैलो जलमाविशेत् ॥
यस्तु प्रव्रजितो भूत्वा पुनः सेवेत मैथुनम् ।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥
अभयं सर्वभूतेभ्यो दत्त्वा यस्तु निवर्तते ।
हन्ति जातानजातांश्च प्रतिगृह्णाति यस्य च ॥
दिवास्वप्नं च यानं च स्त्रीकथालौल्यमेव च ।
मञ्चकः शुक्लवासश्च यतीनां पतनानि षट् ॥
अन्नदानपरो भिक्षुश्चतुरो हन्ति दानतः ।
दातारमन्नमात्मानं यस्मै चान्नं प्रयच्छति ॥
क्रतुः—माधूकरं समाहृत्य ब्राह्मणेभ्यो ददाति यः ।
स याति नरकं विप्रो भोक्ता चान्द्रायणं चरेत् ॥
[*जाबालः—कार्पासोद्भवकाषायं वस्त्रं ग्राह्यमयाचितम् ।
कन्थाकौपीनवासस्तु तेन कार्यं न दुष्यति ॥
अन्यद्वस्त्रं यदा लौल्याद्गृहीत्वोर्णापटादिकम् ।
तेन पापेन च यतिः स्वधर्मात्प्रच्युतो भवेत् ॥ ]
कात्यायनः—द्रव्यस्त्रीमांससंपर्कान्मधुमाक्षिकलेहनात् ।
विचारस्य परित्यागाद्यतिः पतनमृच्छति ॥
व्यासः—क्रोधलोभपरो नित्यं निद्रालस्यपरस्तथा ।
विषादीच्छापरश्चैव श्रेयसो भ्रश्यते द्विजः ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. पुस्तके वर्तते ।

---

१ क. °र्तते यदि । २ ग. घ. °तत्येव न सं° । ३ ग. °दी परमश्चै° ।

दक्षः—पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति ।
श्वपादेनाङ्कयित्वा तं राजा शीघ्रं प्रवासयेत् ॥
क्रतुः—बीजघ्नं तैजसं पात्रं शुक्रोत्सर्गं सिताम्बरम् ।
निशान्नं च दिवा स्वप्नं यतीनां पतनानि षट् ॥
दासीदासं गृहं यानं गोभूधान्यधनं रसान् ।
प्रतिगृह्य यतिर्ग्रामं हन्यात्कुलशतत्रयम् ॥
आविकं पट्टिकां[1] मांसं तूलिकां मञ्चकं मधु ।
शुक्लवस्त्रं च यानं च ताम्बूलं स्त्रियमेव च ॥
प्रतिगृह्य कुलं हन्यात्प्रतिगृह्णाति यस्य च ।
पुष्पं शाखां पल्लवं वा फलमूलतृणादिकम् ॥
भुक्त्वा च यस्तु संन्यासी नरके पतति ध्रुवम् ।
यः स्वधर्मं परित्यज्य यदन्यत्कुरुते द्विजः ॥
न तस्य निष्कृतिः कार्या स्वधर्मात्प्रच्युतो हि सः ।
[*कात्यायनः–ऊर्णा केशोद्भवा ज्ञेया मलकीटोद्भवः पटः ।
कस्तूरीं रोचनं रक्तं वर्जयेदात्मवान्यतिः ॥
हिंसोद्भवं पट्टकूलं कस्तूरी रोचनं तथा ।
प्राण्यङ्गं च तथोर्णा च यतीनां पतनं ध्रुवम् ॥
वस्त्रं कार्पासजं ग्राह्यं कापा(शा)युक्तमयाचितम् ।
अन्यद्वस्त्रादिकं सर्वं त्यजेन्मूत्रपुरीषवत् ॥
ऊर्णा तु रोमसंभूता कृमेर्मलयुतं पटः ।
कस्तूरी रोचनं रक्तं प्राण्यङ्गमस्थिसंनिभम् ॥
एतान्स्पृष्ट्वा प्रमादेन स्वधर्माच्च्यवते यतिः ।
साक्षेपेण यदा लौल्याद्ग्रहणं नरकं ध्रुवः ॥ ]
अङ्गिराः—आरूढपतितो हन्ति दश पूर्वान्दशापरान् ।
निस्तारयति तानेव यदि सम्यग्व्यवस्थितः ॥
क्षेत्रं गावो हिरण्यं च यतेर्यस्य परिग्रहः ।
तादृशं कश्मलं दृष्ट्वा सचैलो जलमाविशेत् ॥
विधवां कञ्चुकोपेतां सधवां कञ्चुकं विना ।
यतिं च कञ्चुकोपेतं दृष्ट्वा चक्षुर्निमीलयेत् ॥

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. पुस्तके वर्तते ।

1 ग. पदिकं मां° ।

चत्वारि पतनीयानि यतीनां मनुरब्रवीत् ।
औषधं संनिधानं च एकान्नं कांस्यभोजनम् ॥
एकान्नी द्विव्रती चैव भेषजी वस्तुसंग्रही ।
चत्वारो नरकं यान्ति मनुः स्वायंभुवोऽब्रवीत् ॥

( *जमदग्निः—चित्रवस्त्रं तु न ग्राह्यमपि कार्पाससंभवम् ।
तथा कीटोद्भवं चीर्णं त्यजेच्छुनकसंघवत् ॥
न रक्तमुल्बणं वासो न नीलं च प्रशस्यते ।
मलाक्तं च दशाहीनं वर्जयेदम्बरं यतिः ॥ )

अथ प्रायश्चित्तं प्रयोगसारे—

तिष्ठेन्नं चिरमादित्यमुपस्थायैव भिक्षया ।
स्थित्वा द्वादश संयच्छेत्प्राणायामांस्तदैव तु ॥
वाचं विसृज्य चाऽऽभाष्य त्रीनेव तु विनिश्चयः ।
( + पतेश्चैव सूतिकाया रजस्वलापतेस्तथा ॥
भाण्डस्पर्शनपर्यन्तं भिक्षार्थं वर्जयेद्गृहम् ।
सूतिका पुत्रजननी विंशद्रात्रेण शुध्यति ॥
मासेनैकेन भिक्षां तु कुर्यात्स्त्रीजननीषु च ।
सप्तमे मासि संप्राप्ते गृहस्थः सूतिका भवेत् ॥
तत्र भिक्षां न कुर्वीत कृत्वा भिक्षुश्च दुष्यति ।
सप्तमासाधिके गर्भे गर्भिण्या यत्तु पच्यते ॥
हव्यं देवा न गृह्णन्ति कव्यं च पितरस्तथा ।
अज्ञानात्कुरुते यश्च प्राणायामांश्च पञ्चशः ॥
अथवा यद्गुरुर्ब्रूयात्तत्कार्यमपनिश्चयः। (?) )
उदक्याचोदितं चान्नं द्विजान्नं शूद्रचोदितम् ॥
प्राण्यङ्गे वाऽऽयसे वाऽन्नं पित्रर्थं कल्पितं तथा ।
देवादिकर्मणि क्लप्तं तथा पापैरुदाहृतम् ॥
नोत्पन्ना संततिः काचित्स्त्रियाः पुंसोऽपि वा गृहे ।
नाश्नीयात्तद्गृहे भिक्षुरश्नंश्चान्द्रायणं चरेत् ॥

* वर्तुलकंसस्थितो ग्रथः क. पुस्तक एव । + वर्तुलकंसस्थितस्त्वयं ग्रन्थः ख. पुस्तके

१ ग. °नां मुनिर° । २ ग. °न्न चर° ।

अशौचं वा गृहे यत्र यावत्सूतकमेव वा ।
पाखण्डिकुष्ठिभ्रूणघ्नैर्दृष्टं चान्नमुदक्यया ॥
श्वषण्ढ[1]काकचण्डालैरन्यैरन्त्यावसायिभिः ।
चान्द्रायणं चरेद्भुक्त्वा[2] भक्षित्वा तु यदृच्छया ॥
पात्रे तु पतिते भैक्ष एकभिक्षां करोति यः ।
स कुर्याच्छ[3]तमश्रान्तः प्राणायामान्विशुद्धये ॥

जमदग्निः—अथवा यद्गुरुर्ब्रूयात्तत्कार्यमविशङ्कया ।
निग्रहेऽनुग्रहे वाऽपि गुरुः सर्वत्र कारणम् ॥
विहाय दण्डं गृह्णानो द्वादशैव तु धारयेत् ।
बहिर्दण्डं प्रतिष्ठाप्य गृह्णानः षोडशैव तु ॥

भैक्षमिति शेषः ।

अत्रिः—भैक्षं च परपाकान्नं संमिश्रं योऽस्ति वै यतिः ।
त्रिरात्रोपोषितो भूत्वा[4] प्राणायामशतं चरेत् ॥
श्वकाकगर्दभैरुष्ट्रैर्जम्बुकैर्वानरैस्तथा ।
चाण्डालपतितैः स्पृष्टं यतिः पात्रं विसर्जयेत् ॥
पूयशोणितमांसैस्तु स्पृष्टं मूत्रपुरीषयोः ।
श्लेष्माश्रुरेतः[5]स्पृष्टं च यतिः पात्रं विसर्जयेत् ॥

यमः—यदि पर्युषितं भैक्षमद्याद्भिक्षुः कथंचन ।
तदा चान्द्रायणं कुर्याद्यतिः शुद्ध्यर्थमात्मनः ॥
भिक्षुर्द्विर्भोजनं कुर्यात्कदाचिज्ज्ञानदुर्बलः ।
स्वस्थावस्थः यदा लौल्यात्तदा चान्द्रायणं चरेत् ॥
आखुजम्बुकमार्जारखरकाकोष्ट्रसूकरान् ।
भासवानरवेश्याश्च नरास्थिग्रामकुक्कुटान् ॥
नकुलं मद्यभाण्डं च यूपकाष्ठं विधर्मिणम् ।
अपविद्धमसन्मार्गं चितिकाष्ठं चितिं तथा ॥
वसनं नीलिकाक्तं च धर्मभेत्तारमेव च ।
अमेध्यनिचयं खड्गं स्पृष्ट्वा देवलकं यतिः ॥
स्थाप्य पात्रं शुचौ देशे शुभं गच्छेज्जलाशयम् ।
शौचं कृत्वा यथान्यायं क्षालयेत्तु मृदम्भसा ॥

१ क. श्वत्रण्डका° । २ क. ख. °क्त्वा भिक्षि° । ३ ग. घ. °र्यात्सांतपनः भ्रान्तः । ४ क. भुक्त्वा । ५ क. °श्रुतेनस्पृ° । ग. श्रुतेनसंस्पृ । घ. श्रुपातैः स्पृ° ।

[1]यदेवोपहतं ह्यङ्गं मृद्भिर्द्वादशभिर्यतिः ।
निमज्जेत्तु ततस्तोये कुर्यादाचमनं ततः ॥
प्राणायामत्रयं कृत्वा त्रिर्जपेदघमर्षणम् ।
अन्तर्जले यथान्यायं शुद्ध्यर्थं योगदीक्षितः ॥
भैक्षाधारं सम[2]ादाय त्रि[3]केणाभ्युक्ष्य वारिणा ।
नि[4]मज्ज्य च ततस्तोये शुद्ध्यर्थं संकरे तदा ॥
एवमेषा हि संस्पृष्टा भिक्षा भिक्षोर्विशुद्ध्यति ।
यदा पात्रं न संलग्नं तदा शुध्यति नान्यथा ॥
संलग्ने त्वथ पात्रे तु सद्यस्त्यागो विधीयते ।
उद्धृत्य सव्यहस्तेन तोयं पिबति यो द्विजः ॥
सुरापानेन तत्तुल्यं पीत्वा चान्द्रायणं चरेत् ।
ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे तु भोजनम् ॥
कृत्वा चोपवसेद्भिक्षुः स्रग्गन्धादिविभूषणम् ।*

जाबालः—संन्यासं कुरुते यस्तु श्राद्धं तस्य विधीयते ।
तस्यान्नं नैव भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ॥

क्रतुः—भर्तृहीना तु या नारी स्वतन्त्रा बन्धुवर्जिता ।
तदन्नं नैव भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ॥
स्वधर्मात्प्रच्युता ये वै पुरुषा योषितोऽपि वा ।
अवीरास्ते सदा ज्ञेया नित्यं सद्भिर्विगर्हिताः ॥

जमदग्निः—आहारग्रहणे रात्रौ प्राणायामा दश स्मृताः ।
जलप्रग्रहणे रात्रौ प्राणाया[5]मस्तथैव च ॥
भुक्तशेषं न कुर्वीत प्रमादात्कुरुते यदि ।
प्रतिग्रासं तदा कुर्यात्त्रींस्त्रीन्प्राणयमान्यतिः ॥
विशीर्णं च सलेपं च पात्रं सोपहतं यदा ।
तत्र मोहाद्यतिर्भुङ्क्ते चरे[6]दिन्दुव्रतं सकृत् ॥

* विभूषणमित्युत्तरमयं ग्रन्थः क. पुस्तके—हारीतः—अलाबुपात्रं च पाषाणं कांस्यपित्तलौ यतीनां पञ्च पात्राणि भुक्त्वा चान्द्रायणं चरेत् । ( ! )

१ क. यदेवाप° । ग. यदैवाप° । घ. यदैवोप° । २ घ. °माधाय । ३ ख. त्रिकोणा° । ४ ख. निमृज्य । ५ ख. यामास्त° । ६ क. घ. °रे'द्बिन्दु° ।

देवलः—दृष्टं भ्रूणघ्नपाखण्डैः कुष्ठ्यादिभिरुदक्यया ।
श्वषण्ढकाकचाण्डालै[1]रन्त्यैरन्त्यावसायिभिः ॥
एतान्पश्यन्न भुञ्जीत भुक्त्वा चान्द्रायणं चरेत् ।
पतितान्नं सकृद्भुक्त्वा प्रायश्चित्ती भवेद्यतिः ॥
तप्तकृच्छ्रत्रयं कृत्वा शुध्यते नात्र संशयः ।

यमः—उपानहौ विना भिक्षुः कृत्वा भिक्षाटनादिकम् ।
मार्गे मूत्रादिसंकीर्णे सम्यक्स्नानेन शुध्यति ॥
अज्ञानाद्या भवेद्धिंसा यतेर्भिक्षाटने क्वचित् ।
प्राणायामत्रयं कृत्वा तथाऽऽचम्य विशुध्यति ॥

जाबालः—स्वस्थावस्थो यदा भुङ्क्ते पुनराहृत्य तद्दिने ।
अन्यग्रामेऽथवा तस्मिंस्तप्तकृच्छ्रं समाचरेत् ॥
यदा ग्रामद्वये भिक्षुश्चरेद्भैक्षं प्रमादतः ।
स्वधर्माकुशलो लुब्धस्तदा चान्द्रायणं चरेत् ॥
अशक्तः प्राणरक्षार्थं पुनर्मूलफलादिकम् ।
भक्षयेन्नैव दुष्येत भेषजं दन्तधावनम् ॥
यथा न पीड्यते कायो नैवान्तकवशं व्रजेत् ।
तथा धर्मं चरेद्भिक्षुः पश्यन्वै शास्त्रचक्षुषा ॥
एकान्नं मधु मांसं च अन्नं विष्ठादिदूषितम् ।
हन्तका[2]रं च नैवेद्यं प्रत्यक्षं लवणं तथा ॥
एतान्भुक्त्वा यतिर्मोहात्प्राजापत्यं समाचरेत् ।
यत्यन्नं यतिपात्रस्थं यतिना प्रेरितं च यत् ॥
अन्नत्रयं न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ।

अत्रिः—सक्तुपेषणगोदोहादन्नपा[3]कादिकालतः ।
ऊर्ध्वं यदि प्रतीक्षेत भिक्षार्थं भैक्षमाचरेत् ॥
कालातिक्रमदोषेण स्वधर्मात्प्रच्युतो भवेत् ।
द्वादशैव तथा कुर्यात्प्राणायामांश्च शुद्धये ॥
ज्ञातीनां तु कुले भिक्षुर्न भिक्षेत कथंचन ।
आचरेत यदा भिक्षां तदा चान्द्रायणं चरेत् ॥
प्राणायामशतं कुर्याद्भुक्त्वा शूद्रान्नमापदि ।
सगोत्रमसगोत्रं वा यद्गृहे सूतकं भवेत् ॥

१ क. °रन्यैर° । २ ख. ग. घ. °कारं निवेद्यं च प्र° । ३ ग. घ. पानादि° ।

न तावच्छुध्यते भूमिर्यावन्न स्यादनिर्दशम् ।
भिक्षां भिक्षुर्न भिक्षेत भिक्षंश्चान्द्रायणं चरेत् ॥
निषिद्धान्नं यदाऽश्नीयादनुज्ञा यत्र नास्ति वै ।
अतिकृच्छ्रं तदा भिक्षुः कुर्याच्छुद्ध्यर्थमात्मनः ॥

जमदग्निः-गन्धं घ्रात्वा सुरायाश्च तथा मूत्रपुरीषयोः ।
क्रव्यादपूतिगन्धं च प्राणायामो विधीयते ॥
उद्धृत्य वामहस्तेन भाजनं योऽन्नमत्ति वै ।
गृध्रोच्छिष्टं तु तज्ज्ञेयं भुक्त्वा चान्द्रायणं चरेत् ॥
भुञ्जानस्य यदा भिक्षोः कदाचित्स्रवते गुदम् ।
अन्नं चाऽऽस्यगतं त्यक्त्वा कृत्वा शौचं समाहितः ॥
स्नानं कृत्वा यथान्यायं त्रिंशत्प्राणायमांश्चरेत् ।
अहोरात्रोषितो भूत्वा पञ्चगव्यं पिबेत्ततः ॥

आश्वलायनः-विनाऽङ्गुष्ठेन नाश्नीयान्न लिहेज्जिह्वया करम् ।
अश्नन्यदि लिहेद्धस्तं तदा चान्द्रायणं चरेत् ॥

[*पाद्मे-मठेष्वभोज्यमन्नं स्याद्भुक्त्वा चान्द्रायणं चरेत् ।
स्पृष्ट्वा मठपतिं चैव सवासा जलमाविशेत् ॥ ]

विश्वामित्रः-मत्स्यमांसादि बहुलं यद्गृहे पच्यते भृशम् ।
तद्गृहं वर्जयेद्भिक्षुर्यदि भिक्षां समाचरेत् ॥
द्वादशांस्तु(शाथ) यमान्कृत्वा ततः पापात्प्रमुच्यते ।
मृद्भस्मोदकमन्नं वाऽभोज्यान्नाऽऽददते यतिः ॥
आददानः प्रमादेन प्रायश्चित्तं समाचरेत् ।
त्रिंशत्प्राणयमान्कृत्वा जपेत्त्रिकशतत्रयम् ॥
अज्ञानादर्धमेवैतत्प्रायश्चित्तं विधीयते ।
अभ्यासादधिकं किंचिद्वर्धते दिनसंख्यया ॥
एकान्नं तु त्र्यहं भुक्त्वा निरन्तरमनापदि ।
प्राणायामशतं कुर्याच्छुद्ध्यर्थं यतिरात्मवान् ॥

जमदग्निः-कृकलासे क्षीरगले मण्डूके गृहगोधिके ।
कुक्कुटादिषु भूतेषु दशाहं चार्धभोजनम् ॥

* धनुश्चिह्नान्तर्गतग्रन्थः क. पुस्तक एव ।

१ ख. न गृह्णीयाद्भुक्त्वा चान्द्रा° । २ ख. घ. °न्नान्नाऽऽददेद्यतिः ।

मार्जारे मूषके सर्पे स्थूलमत्स्येषु पक्षिषु ।
नकुलादिषु भूतेषु चरेच्चान्द्रायणं व्रतम् ॥
पिपीलिकायां सूक्ष्मायां प्राणायामास्त्रयस्त्रयः ।
यूकायां मत्कुणे चैव मशके पञ्च निर्दिशेत् ॥
मूलाङ्कुरेषु पत्रेषु पुष्पेषु च फलेषु च ।
स्थावराणां चोपमर्दे प्राणायामास्त्रयस्त्रयः ॥
धान्यं वृक्षं लतां यस्तु स्थावरं जङ्गमं तथा ।
उत्पाटयति मूढात्मा अवीचीनरकं व्रजेत् ॥
अकामादपि हिंसेत पशून्मृगादिकान्यतिः ।
कृच्छ्रातिकृच्छ्रौ कुर्वीत चान्द्रायणमथापि वा ॥

हारीतः—अह्ना रात्र्या च यो[1] जन्तून्हिनस्त्यज्ञानतो यतिः ।
प्राणायामान्दशाष्टौ वा प्रायश्चित्तं यतिश्चरेत् ॥
चाक्षुषे दश कुर्वीत वाच्ये विंशतिमेव च ।
मानसे त्रिंशतं वाऽपि पातके प्राणसंयमान् ॥

यमः—दिवसे दिवसे चैव प्राणायामांस्तु षोडश ।
अपि भ्रूणहनं मासात्पुनन्त्यहरहः कृताः ॥
कणपिण्याकतक्रं वा शाकमूलफलादिकम् ।
पक्वं वाऽप्यथ वाऽपक्वं पचन्नज्ञानतो यतिः ॥
आचरेत्त्रीणि कृच्छ्राणि प्राकृतान्येव शुद्धये ।
अभ्यासाद्बुद्धिपूर्वं हि पाकदोषान्न मुच्यते ॥

बह्वृचपरिशिष्टे—सुवर्णं रजतं ताम्रं तैजसं यच्च किंचन ।
स्पृष्ट्वा परिव्राट्शूद्रं च सवासा जलमाविशेत् ॥
द्रव्यं तु मुद्रितं स्पृष्ट्वा त्रिरात्रेण शुचिर्भवेत् ।

अत्रिः—श्वाव्युष्ट्रजम्बुकैर्दष्टे नरवानररासभैः ॥
क्रव्याद्दैर्दंष्ट्रिभिश्चान्यैः प्रायश्चित्तं यतिश्चरेत् ।
स्नात्वा स्मृत्वा हरिं कुर्याद्द्वादश प्राणसंयमान् ॥
स्वकाये स्वयमुत्पाद्य शोणितं वै यतिः क्वचित् ।
प्राणायामत्रयं कृत्वा तथाऽऽचम्य विशुध्यति ॥

---

[1] ग. घ. यान्।

[*उदङ्मुखः प्राङ्मुखो वा कदाचित्पश्चिमामुखः ।
पश्चिमा (दक्षिणा)भिमुखो भिक्षुर्नचाश्नीयात्कदाचन ॥ ]

अत्रिः—आरूढपतितं दृष्ट्वा विना स्नानं तु यश्चरे[1]त् ।
पानभिक्षादिकं कर्म तदा चान्द्रायणं चरेत् ॥

कपिलः-स्वप्ने [2]स्त्रीसङ्गभोगेन स्नात्वा त्रिसहस्रं जपेत् ।
कण्डूयनेन क्षरण उपवासस्तदाऽऽचरेत् ॥

शत[3]त्रयं वा जपेदिति ।

देवलः—स्वप्नस्कन्ने दुर्बलत्वात्प्राणायामास्तु षोडश ।
रेतःसेकं क्वचिद्भिक्षुः कुर्यान्मोहात्तु कामतः ॥
प्राजापत्यत्रयं कृत्वा प्राणायामशतं चरेत् ।
+स्वभावतो दिवा स्कन्ने प्राजापत्यं समाचरेत् ॥
स्त्रियं दृष्ट्वा यदा स्वप्ने रेतः क्षरति वै क्वचित् ।
सवासाऽऽप्लुत्य शुद्ध्यर्थं कुर्यात्षोडश संयमान् ॥
उपवासं यतिः कुर्यात्पुनः सुप्तः क्षरेद्यदि ।
प्राणायामैर्विशुद्धात्मा विरजो जायते पुनः ॥
व्रणात्तु कृमिसंभूतौ भक्षणे मधुमांसयोः ।
उपवासत्रयं कृत्वा प्राणायामशतं चरेत् ॥
यूकायाः शतसंभूतावुपवासं समाचरेत् ।
ताम्बूलभक्षणेऽभ्यङ्गे कांस्यपात्रे च भोजने ॥
एकैकातिक्रमे तेषां प्राणायामशतं चरेत् ।
अदण्डो न गृ[4]हं गच्छेदिषुक्षेपात्रिकाद्वने ॥
यदि गच्छेत्प्रतिगृहं प्राणायामत्रयं चरेत् ।

हारीतः-गुरुवचनातिक्रमे च स्वधर्मातिक्रमे च[5] पर्णचान्द्रायणं चरेत् ।
वर्षाकाले विना विघ्नं शरणं संत्यजेद्यदि ॥
शुद्ध्यर्थं तु तदा कुर्यात्कृच्छ्रं च[6] शतसंयमान् ।
प्रतिक्रोशं चरेत्कृच्छ्रं लोभमोहादिना त्यजेत् ॥

सत्यकामः-दण्डग्रहणं कृत्वा पुत्रमित्रभ्रात्रादिसंभाषणं न कुर्यात् ।

* धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तके वर्तते । + एतदर्धं न ख. पुस्तके ।

१ क. °त् । यान ° । २ ग. घ. स्त्रीसह संभोगे । ३ क. ख. लक्षत्रयं । ४ ख. गृहाद्गच्छे°
५ ख. च पूर्ण° । ६ ख. वा ।

अज्ञानाद्भाषणं कृत्वा प्रायश्चित्तेन युज्यते ।
उपवासमेकं कृत्वा तु प्राणायामशतं चरेत् ॥

तद्गृहं गच्छति स्वजने करोति भिक्षां गृह्णाति प्राजापत्यव्रतं कृत्वा प्राणायामशतं चरेत् । तं दृष्ट्वा दुःखं करोत्यश्रु पातयन्प्रायश्चित्तेन युज्यते ।

उपवासत्रयं कृत्वा प्राणायामशतं चरेत् ।

अत्रिः—यदि कश्चित्प्रमादेन विना स्नानं समाचरेत्[1] ।
खानपानादिकं कर्म प्राजापत्यं समाचरेत् ॥

सत्यकामः-भिक्षुः प्रायश्चित्तं समाचरेत् ।
जपेत्त्रिकसहस्रं च प्राणायामांश्च षोडश ॥

कपिलः—पूर्वसंभोगं न स्मरेत् । प्रमादात्स्मरणादाचम्य प्राणायामत्रयं कृत्वा पुनराच(चा)मेत् । स्वप्नसंभोगे स्नात्वा त्रिकसहस्रं जपेत् ।

अत्रिः-तिलधान्यसुवर्णानि गोभूयानगृहादिकम् ।
दासीदासं रसं गन्धं याचितायाचितं तु यत् ॥
हृदि शोकं पुरा कृत्वा तत्सर्वं तु परित्यजेत् ।
संत्यज्य सर्वं द्रव्यं तु चरेच्चान्द्रायणं यतिः ॥
[2]प्रहीणं तु यदा दद्याद्यतिस्तिलकुशादिकम् ।
प्रक्षिप्य तद्धनं भूमौ चरेत्कृच्छ्रं जपेत्त्रिकम् ॥

वायुपुराणे-संन्यासी यो हि भूत्वा तु हिरण्यं संग्रहेद्यदि ।
तस्य दर्शनमात्रेण सचैलो जलमाविशेत् ॥
[3]द्रव्यादानं यतिर्यो वै प्रकरोति नराधमः ।
पच्यते नरके घोरे यावदाभूतसंप्लवम् ॥
अद्वैतभावमाश्रित्य द्वैताचारेण वर्तते ।
रुदन्ति पितरस्तस्य हा कष्टं पतितं पुनः ॥
लब्धं द्रव्यं परित्यज्य उपवासत्रयं चरेत् ।
प्राणायामशतं कृत्वा त्वयुतं जपमाचरेत् ॥
सामर्थ्ये शिबिकामश्वं गजं वृषभमेव च ।
शकटं वा रथं वाऽपि समारुह्य च कामतः ॥

१ घ. °त् । अन्नपा° । २ ग. प्रहणं । घ. प्रहाणं । ३ ग. द्रव्यदानं यतीनां यो क° ।

व्रतं सांतपनं कुर्यात्प्राणायामशतान्वितम् ।
असामर्थ्ये समारुह्य यानं पूर्वोदितं पुनः ॥
कृच्छ्रैकं शोधनं तत्र प्राणायामांस्त्वकामतः ।
स्वयं पक्त्वा तु यो भुङ्क्ते तस्य सांतपनत्रयम् ॥
पाचयित्वा तु यो भुङ्क्ते तस्य कृच्छ्रं विधीयते ।
गण्डूषपादशौचादि यस्मिन्पात्रे च निक्षिपेत् ॥
षण्मासं निक्षिपेद्भूमौ दशक्षारेण शुध्यति ।

मार्कण्डेयपुराणे—मूत्रोत्सर्गं तु यः कृत्वा अकृत्वा शौचमात्मनः ।
मोहाद्भुक्त्वा त्रिरात्रं स गव्यं पीत्वा विशुध्यति ॥

गव्यं घृतम् ।

मूत्रं कृत्वा व्रजेन्मार्गं स्मृतिभ्रंशाज्जलं पिबेत् ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥

छागलेयः—व्रतानि यानि भिक्षूणां तथैवोपव्रतानि च ।
एकैकातिक्रमे तेषां प्रायश्चित्तं विधीयते ॥
अहोरात्रोषितो भूत्वा कृच्छ्रं चान्द्रायणं चरेत् ।
यस्माज्ज्ञानात्तथा ध्यानान्नान्यद्भिक्षोस्तु शोधनम् ॥
तस्मात्तानि सदा कुर्याद्यतिः शुद्ध्यर्थमात्मनः ।
उपपातकिनो भिक्षोर्लब्धाहारो जपस्ततः ॥
मौनं कालत्रये स्नानं विहितानि विशेषतः ।
सहस्राणि यमान्कुर्यात्प्रणवस्यायुतं जपेत् ॥
अरण्ये व्रतमेतत्तु कृत्वा भिक्षुर्विशुध्यति ।
महापातकजाद्दोषाद्विशुद्ध्यर्थं सदा यतिः ॥
त्रिलक्षं तु जपेद्योगी प्राणायामायुतं तथा ।
ततः शतसहस्रं तु प्रणवानां जपेद्यतिः ॥
स्त्रीसंभोगे सकृन्मोहाद्विधिनाऽनेन शुध्यति ।

स्मृत्यन्तरे—अन्तः प्रक्षाल्य लिङ्गस्य यतिश्चान्द्रायणं चरेत् ।
रेतोत्सर्गं यदा कुर्यात्प्रायश्चित्ती भवेद्यतिः ॥
प्राजापत्यत्रयं कुर्यात्प्राणायामशतानि च ।

कपिलः—कण्डूयनक्षरण उपवासः । चिन्तने त्रिरात्रम् । मधुमांसास्वादने च सकृत्स्त्रीगमने च द्वादशरात्रमुपवासयेत् । त्रिलक्षं जपेत् ।

---

१ ग. °त्पोष्य°। २ क. °स्तु साध°।

[1]अभ्यासे सकृदप्यन्त्यजागमनेऽरण्यं गत्वा बिल्वादिफलैः स्वपतितैर्यतिश्चान्द्रायणव्रती ब्रह्माऽऽवर्तयन्यावज्जीवं वसेन्मृतः शुध्यति ।

आपस्तम्बः—रजकश्चर्मकारश्च नटो बुरुड[2] एव च ।
कैवर्तमेदभिल्लाश्च सप्तैते ह्यन्त्यजाः स्मृताः ॥

दत्तात्रेयः—उपेत्य वा स्त्रियं कामात्प्रायश्चित्तं विधीयते ।
प्राणायामसमायुक्तं[3] कृच्छ्रमब्दं समाचरेत् ॥
तथैव च पुनः श्रान्तः[4] कुर्यात्सांतपनं व्रतम् ।
तपश्चरितनिर्देशात्कृच्छ्रस्यान्ते समाहितः ॥
पुनश्चाऽऽश्रममागत्य चरेद्भिक्षुरतन्द्रितः ।
पाराकं त्रिकलक्षं च सकृद्गत्वा स्त्रियं चरेत् ॥
त्रिरात्रमभ्यसेद्ब्रह्म[6] संवत्सरत्रिकं जपेत् ।
गृहस्थश्च यतिश्चैव खण्डितो यदि कामतः ॥
पराकत्रयसंयुक्तमवकीर्णिव्रतं चरेत् ।
स्कन्न इन्द्रियदौर्बल्यात्स्त्रियं दृष्ट्वा यतिर्यदि ॥
तेन धारयितव्या वै प्राणायामास्तु षोडश ।
इच्छया यदि तां पश्येत्प्राणायामास्तु षोडश ॥
रात्रौ तु क्षरणे स्नात्वा द्वादशैव तु धारयेत् ।
स्वप्नसेके प्रबुद्धश्च मृद्भिर्द्वादशभिर्यतिः ॥
शौचं कृत्वा विशुध्येत षोडशप्राणसंयमैः ।
रात्रिशेषे यदा स्वप्ने रेतो मूत्रं च वापयत ॥
स्नानं कृत्वा विशुध्येत षोडशप्राणसंयमैः ।
पुनः प्रसङ्गे सुप्तस्य द्विगुणं तु विधीयते ॥
स्कन्ने ज्ञाते तु सुप्तश्चेदुपवासस्तदा भवेत् ।
आलिङ्गनादिषु स्कन्ने वियोगे चेन्द्रियैर्यदा ॥
कृच्छ्रार्धेन जपेल्लक्षं ततः शुद्धिमियाद्यतिः ।
संशयश्चेत्कृते तस्मिन्पुनः शौचं समाचरेत् ॥
[*निशि स्कन्ने यदुक्तं स्याद्दिवा तद्द्विगुणं भवेत् ।
क्षौरं मेण्ढ्रप्रदेशे तु कृत्वा कृच्छ्रं समाचरेत् ॥ ]
प्राणायामशतं कृत्वा तस्माद्भिक्षुर्विशुध्यति ।

* धनुश्चिह्नान्तर्गतो ग्रन्थो घ. पुस्तके वर्तते ।

१ घ. अभ्यासे । २ ख. वरट । ३ ग. घ. °युक्तः कृ । ४ क. स्नात. । ५ क. ख. ब्रह्मेषमभ्यासे । ६ ग. सेद्भिक्षुः सं° । ७ ख. पारयेत् । ८ ख. °सस्तद्द्विगु° ।

क्रतुः—ताम्बूलभक्षणेऽभ्यङ्गे कांस्यपात्रे च भोजने ।
एकैकातिक्रमे तेषां प्राणायामा दश स्मृताः ॥
आखुश्च जम्बुकैर्दष्टे नररासभवानरैः ।
क्रव्याद्भिर्दंष्ट्रिभिश्चान्यैः प्रायश्चित्तं यतिश्चरेत् ॥
स्मरन्हरिं हरं गङ्गां कृत्वा स्नानं यथाविधि ।
द्वादशैव विशुद्ध्यर्थं प्राणायामान्षडाचरेत् ॥

सत्यकामः—स्त्रीशूद्रयोर्दण्डान्तरगमने प्राणायामांस्त्रीन्करोति[1] खरोष्ट्रान्तरगमने प्राणायामान्षडाचरेत्[2] । श्वशूकरचाण्डालान्तरगमने प्राणायामान्द्वादश । विहितातिक्रमं कृत्वा प्राणायामान्द्वादशैवेति ।

वायव्ये—अदण्डो नैव तिष्ठेत यतिः कुत्रचिदात्मवान् ।
यदि तिष्ठेत्प्रतिदिनं प्राणायामशतं चरेत् ॥
दण्डात्मनोस्तु चाण्डालैर्व्यवधानेन भिक्षुकः ।
प्राणायामशतं कुर्यान्मात्राभेदे[3] तथैव च ॥
शूद्रेण व्यवधाने तु प्राणायामांस्तु षोडश ।
द्वादशाष्टौ च चत्वारि विट्क्षत्रियद्विजोत्तमैः ॥
जलान्तरादिक्षिप्तेषु न कश्चिद्दोषभाग्भवेत् ।
भग्नदण्डादिकं चैव जलेऽगाधे क्षिपेद्यतिः ॥
मद्यमूत्रपुरीषैश्च शुक्रकीलालशोणितैः ।
स्पृष्टं दण्डं त्यजेद्भिक्षुः शेषैः संस्कारमर्हति ॥
प्रातःस्नानं विना कामात्प्राणायामशतं चरेत् ।
एवमेव तु सायाह्ने मध्याह्ने तु सहस्रकम् ॥
प्रेतश्राद्धे यतिर्भुक्त्वा चरेच्चान्द्रायणत्रयम् ।
पितृस्थानं विनाऽन्यत्र श्राद्धं भुक्त्वा तदेव तु ॥
एकश्चेत्पैतृके स्थाने द्वितीयो वैश्वदेवके ।
श्राद्धदिने विना श्राद्धं भुक्त्वा सांतपनं चरेत् ॥
बहुभोज्ये यतिर्भुक्त्वा कुर्यादेतद्व्रतं पुनः ।
वाग्दण्डो हन्ति वै ज्ञानं मनोदण्डः परां गतिम् ॥
कर्मदण्डस्तु त्रीँल्लोकान्हन्यादपरिरक्षितः ।
वाग्दण्डे मौनमातिष्ठेत्कर्मदण्डे त्वभोजनम् ॥
मानसे तु कृते दण्डे प्राणायामो विधीयते ।

---

१ ग. घ. ॰ति । श्वख॰ । २ घ. त् । शू॰ । ३ ग. ॰भेदैस्त॰ ।

एकस्मिन्निमित्ते गुरुलघुप्रायश्चित्तविधानं तु विद्वदविद्वत्सु बुद्धिपूर्वाबुद्धिपूर्वप्रसज्याप्रसज्यादिविभागतो द्रष्टव्यम् । तत्रापि मन्दमध्यमोत्तमाधिकारिभिरवशीकृतचित्तैः कृच्छ्रचान्द्रायणप्रणवजपप्राणायामादयः कार्याः । वशीकृतचित्तैस्तु ध्यानमेव कार्यम् ।

उक्तं च—प्रायश्चित्तेषु सर्वेषु यतेर्ध्यानं विशिष्यते ।
प्रणवस्य जपो वाऽथ मूलमन्त्रस्य संस्मृतः ॥
प्राधान्यं श्रूयते श्रुत्या प्रणवस्य जपादिषु ।
तस्मात्सर्वप्रयत्नेन प्रणवैकपरो भवेत् ॥
जपाज्ज्ञानात्तथा ध्यानान्नान्यद्भिक्षोस्तु शोधनम् ।
तस्मात्तानि सदा कुर्याद्यतिः शुद्ध्यर्थमात्मनः ॥
सर्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम् ।
द्विजस्तपस्वी भवति पङ्क्तिपावन एव सः ॥
ध्यानेन सदृशं नास्ति शोधनं पापकर्मणाम् ।
श्वपाकेष्वपि भुञ्जानो ध्यायी नैव तु लिप्यते ॥
कृष्णानुस्मरणादेव पापसंघातपञ्जरम् ।
शतधा भेदमायाति गिरिर्वज्रहतो यथा ॥
यथाऽग्निरुद्धतशिखः कक्षं दहति सानिलः ।
तथा चित्तस्थितो विष्णुर्नराणां सर्वकिल्बिषम् ॥
यथा विष्णोः स्मृतेः सद्यः संक्षयं याति पातकम् ।
तथा तन्नाशमभ्येति यद्दुःखं व्याधितो भवेत् ॥
ज्ञानह्रदे ध्यानजले रागद्वेषमलापहे ।
यः स्नाति मानसे तीर्थे स याति परमां गतिम् ॥
कलौ पित्रादिदोषाढ्यो विषयाकृष्टमानसः ।
कृत्वाऽपि सकलं पापं गोविन्दं संस्मरञ्छुचिः ॥
शुचिरप्रयतो वाऽपि सर्वावस्थां गतोऽपि वा ।
यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥
कलिकल्मषमत्युग्रं नरकार्तिप्रदं नृणाम् ।
प्रयाति विलयं सद्यः सकृद्विष्णोर्हि संस्मृतेः ॥
[ *स्मृत्यन्तरे—यावन्न निर्गुणं ब्रह्म मोक्षालम्बनमद्वयम् ।
आविशेद्धृदये तावत्सगुणं ब्रह्म चिन्तयेत् ॥

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. पुस्तके वर्तते ।

१ ख. घ. दितिवि° । २ ख. ग. °षाढयो वि° ।

वृद्धशातातपः—पक्षोपवासाद्यत्पापं पुरुषस्य प्रणश्यति ।
प्राणायामशतेनापि तत्पापं नश्यते नृणाम् ॥
प्राणायामसहस्रेण यत्पापं नश्यते नृणाम् ।
क्षणमात्रेण तत्पापं हरेर्ध्यानाद्विनश्यति ॥ ]

अत्रिः—उपपातकेषु सर्वेषु पातकेषु महत्सु च ।
प्रविश्य रजनीपादं ब्रह्मध्यानं समाचरेत् ॥
ब्रह्महत्यासहस्राणि अगम्यागमनानि च ।
एकेन ध्यानयोगेन नश्यन्त्यन्यान्यपि क्षणात् ॥
यदि स्यात्पातकं किंचिद्योगी कुर्यात्प्रमादतः ।
योगमेव निषेवेत नान्यं यत्नं कदाचन ॥

विष्णुपुराणे—प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥
*कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परम् ॥
प्रातर्निशि तथा संध्यामध्याह्नादिषु संस्मरन् ।
नारायणमवाप्नोति सद्यः पापक्षयान्नरः ॥
विष्णुस्मरणसंक्षीणसमस्तक्लेशसंचयः ।
मुक्तिं प्रयाति स्वर्गाप्तिस्तस्य विघ्नोऽनुमीयते[1] ॥
वासुदेवे मनो यस्य जपहोमार्चनादिषु ।
तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम् ॥
क्व नाकपृष्ठगमनं पुनरावृत्तिलक्षणम् ।
क्व जपो वासुदेवेति मुक्तिबीजमनुत्तमम् ॥
तस्मादहर्निशं विष्णुं संस्मरन्पुरुषो मुने ।
न याति नरकं शुद्धः संक्षीणाखिलपातकः ॥

[+स्कन्दपुराणे—अर्थवादं हरेर्नाम्नि संभावयति यो नरः ।
महानरकजालेषु पच्यते नात्र संशयः ॥]

यतिधर्मसमुच्चये—अश्वमेधसहस्रैस्तु वाजपेयशतैरपि[2] ।
यत्पापं विलयं याति स्मृते नश्यति तद्धरौ ॥

* एतद्वचनं न विद्यते क. पुस्तके । + धनुश्चिह्नान्तर्गतो ग्रन्थः क. पुस्तक एव ।

१ ख. °घ्नो न मी° । २ क. °पेयायुतै°

गङ्गास्नानसहस्रैश्च पुष्करस्नानकोटिभिः ।
यत्पापं विलयं याति स्मृते नश्यति तद्धरौ ॥
ब्रह्महत्यासहस्राणि अगम्यागमनानि च ।
एकेन ध्यानयोगेन नश्यन्त्यन्यान्यपि क्षणात् ॥
गृहस्थोक्तानि पापानि भवन्त्याश्रमिणो यदि ।
शौचवच्छोधनं तेषां प्रोक्तं च ब्रह्मनिदर्शनात् ॥
ज्ञानिनः सेवनाच्छुद्धिर्ज्ञानस्येति न संशयः ।
भिद्यते शोकमोहादि च्छिद्यन्ते सर्वसंशयाः ॥
क्षीयन्ते चास्य कर्माणि ज्ञाते ब्रह्मणि तद्विदः ।
सर्वमन्यत्परित्यज्य यस्तु ब्रह्मणि वर्तते ॥
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ।
यद्बाल्ये यच्च कौमारे यत्पापं यौवने कृतम् ॥
तत्पापमखिलं क्षिप्रं स्मृते विष्णौ प्रणश्यति ।

भगवद्गीतासु—अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ [अ० ४ श्लो० ३६]

याज्ञवल्क्यः—भूतात्मनस्तपोविद्ये बुद्धेर्ज्ञानं विशोधनम् ।
क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता ॥

स्कन्दपुराणे—अभक्ष्यभक्षणात्पापमगम्यागमनादिजम् ।
नश्यते नात्र संदेहो गोविन्दस्य च कीर्तनात् ॥
गोविन्देत्युक्तमात्रेण * हेलया कलिवर्धनः ।
पापौघो विलयं याति दानमश्रोत्रिये यथा ॥
तन्नास्ति कर्मजं लोके वाग्जं मानसमेव वा ।
यत्तु न क्षीयते पापं कलौ गोविन्दकीर्तनात् ॥

वामनपुराणे—अश्वमेधादिभिर्यज्ञैर्नरमेधैस्तथैव च ।
याजितं तेन येनोक्तं हरिरित्यक्षरद्वयम् ॥

विष्णुपुराणे—अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।
पुमान्विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥
यन्नामकीर्तनं भक्त्या विलापनमनुत्तमम् ।
मैत्रेयाशेषपापानां धातूनामिव पावकः ॥

---

* घ. पुस्तके समासे—देहे यः कलिवर्धनः । इति पाठान्तरम् ।

१ ग. प्रागब्रह्मण्यनुद° । घ. प्रागब्रह्माणितुद° । ३ क. °र्वमेतत्प° ।

कमलनयन वासुदेव विष्णो धरणीधराच्युत शङ्खचक्रपाणे ।
भव शरणमितीरयन्ति ये वै त्यज भट दूरतरेण तानपापान् ॥
ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥
यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने
विघ्नो यत्र निवेशितात्ममनसां ब्राह्मोऽपि लोकोऽल्पकः ।
मुक्तिं चेतसि[1] यः स्थितोऽमलधियां पुंसां ददात्यच्युतः
किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्तिते ॥
एवं स्तुवन्नरो राजन्सदा नारायणं विभुम् ।
यमलोकं न पश्येत्तु नरकांस्तु कुतः पुनः ॥
शृण्वन्नपि स्तुवन्नित्यं स्मरन्नपि युधिष्ठिर ।
महापातकजा[2]न्मर्त्यो मुच्यते सर्वकिल्बिषात् ॥

तदुक्तं श्रीभागवते—कलेर्दोषनिधे राजन्नस्ति ह्येको महान्गुणः ।
कीर्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ॥

विष्णुपुराणे—येऽहर्निशं जगद्धातुर्वासुदेवस्य कीर्तनम् ।
कुर्वन्ति तान्नरव्याघ्र न कलिर्बाधते नरान् ॥
चक्रायुधस्य नामानि सदा सर्वत्र कीर्तयेत् ।
नाऽऽशौचं कीर्तने तस्य स पवित्रकरो यतः ॥
सर्वेषामेव पापानां संघाते समुपस्थिते ।
अभ्यसेद्दशसाहस्रं प्रणवं शोधनं तु तत् ॥
दिने दिने तु वेदान्तश्रवणाद्भक्तिसंयुतात् ।
गुरुशुश्रूषया [3]लब्धात्कृच्छ्राशीतिफलं लभेत् ॥
वेदान्तश्रवणादेव नश्यन्ते चोपपात[4]काः ।
महापातकसंघाश्च नित्यं वेदान्तसेवनात् ॥

महाभारते भीष्मवचनम्—
* एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥

* एतद्वचनं न विद्यते क. पुस्तके ।

१ ग. °सि संस्थितो° । घ. °सि संस्थिते° । २ क. ख. °जान्मृत्योर्मुच्य° । ३ ख. ग. लब्ध्वा कृच्छ्रा° । ४ क. °तकम् । म° ।

अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥
मनुः—जपेनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥
जपस्तु सर्वधर्मेभ्यः परमो धर्म उच्यते ।
अहिंसया च भूतानां जपयज्ञः प्रवर्तते ॥
शमायालं जलं वह्नेस्तमसो भास्करोदयः ।
क्षान्तिः कलेरघौघस्य नामसंकीर्तनं हरेः * ॥
स्तुवन्विष्णुं वासुदेवं विपापो जायते नरः ।
विष्णोः संपूजनान्नित्यं सर्वपापं प्रणश्यति ॥
वेदस्मृतिपुराणेभ्यो वाक्यान्येतानि यत्नतः ।
विश्वेश्वरेण मुनिना संगृहीतानि भागशः ॥
यतिधर्मप्रकाशाय ज्ञानमोक्षप्रसिद्धये ।
एकत्र परहंसानां मुमुक्षूणां विशेषतः ॥

इति परमहंसपरिव्राजकविश्वेश्वरसरस्वतीसंगृहीते यतिधर्मसमुच्चये नित्याद्याचारः ।

## अथ यतिसेवाप्रशंसा ।

गृहस्थादिभिर्यतिः पूज्यः ।

उक्तं च भगवता—एकदण्डी त्रिदण्डी वा शिखी मुण्डी तथैव च ।
काषायमात्रधारोऽपि यतिः पूज्यो युधिष्ठिर ॥ इति ।

अत्रिः—चतुर्विधो भिक्षुकः स्यात्कुटीचकबहूदकौ ।
हंसः परमहंसश्च यो यः पश्चात्स उत्तमः ॥
ब्रह्मचारी सहस्रं च वानप्रस्थशतानि च ।
ब्राह्मणानां हि कोट्यस्तु यतिरेको विशिष्यते ॥

अत्रिः—साक्षाद्विष्णवाकृतिर्विप्रो नमस्योऽयं सुरासुरैः ।
वर्णाश्रमैः समस्तैश्च परहंसो द्विजोत्तमः ॥
द्वे रूपे वासुदेवस्य चलं चाचलमेव च ।
चलं संन्यासिनां रूपमचलं प्रतिमादिकम् ॥

* इत उत्तरग्रन्थः ख. पुस्तके त्रुटितो विद्यते

देवताप्रतिमां दृष्ट्वा यतिं दृष्ट्वैकदण्डिनम् ।
नमस्कारमकुर्वाणो नरकं रौरवं व्रजेत् ॥
विष्णुलिङ्गाश्रितं विप्रं दृष्ट्वा चैव नराधमाः ।
स्थिताः शय्यासने याने न त्यजन्ति विमोहिताः ॥
अभ्युत्थानं नमस्कारः प्रसन्नवदनादिकम् ।
कर्मणा मनसा वाचा ये न कुर्वन्ति सत्क्रियाम् ॥
सदाचारपरिभ्रष्टास्ते पापा यान्त्यधोगतिम् ।

हारीतः—सर्वेषामाश्रमाणां तु संन्यासी ह्युत्तमाश्रमी ।
स एवात्र नमस्यः स्याद्भक्त्या सन्मार्गवर्तिभिः ॥
ब्रह्मिष्ठः परमो हंसः साक्षान्नारायणः स्मृतः ।
यस्तं संपूजयेन्नित्यं विष्णुस्तेन प्रपूजितः ॥
अष्टाक्षरेण मन्त्रेण यतयस्तु नमस्कृताः ।
स्मृतनारायणा घ्नन्ति प्राणिनां पापपञ्जरम् ॥
अष्टाक्षरेण मन्त्रेण नमो नारायणात्मना ।
नमस्यो भक्तिभावेन विष्णुरूपी यतिर्यतः ॥
यत्र कुत्रापि यतिनं दृष्ट्वा यो दण्डवद्भुवि ।
न नमेदिति कायेन कल्पान्ते रौरवादयः ॥

वृद्धयाज्ञवल्क्यः—उपचर्यः सदा भिक्षुराश्रमस्थो विचक्षणैः ।
व्रतलोपो यथा चास्य न भवेद्वै यथा तथा ॥

जाबालः—आसनं[1] शयनं यानं यतिं दृष्ट्वा न यस्त्यजेत् ।
स मृतोऽपि हि दुष्टात्मा श्वयोनावेव जायते ॥
दुर्वृत्ते वा सुवृत्ते वा यतौ निन्दां न कारयेत् ।
यतीन्वै दूषमाणस्तु नरकं याति दारुणम् ॥
यतिहस्तगतं द्रव्यं गृह्णीयाज्ज्ञानतो यदि ।
अधः स नयते मूढः कुलानामेकविंशतिम् ॥

वृद्धयाज्ञवल्क्यः—शुष्कमन्नं पृथक्पाकं यो यतिभ्यः प्रयच्छति ।
स मूढो नरकं याति तेन पापेन कर्मणा ॥
यतिभ्यः श्रद्धया दद्याद्भिक्षां पात्रप्रपूरणीम् ।
न क्षीयते च तत्तस्य कल्पकोटिशतैरपि ॥

१ क. अशन ।

भिक्षाकाले यतिर्यस्य गृहं प्राप्तो यदा भवेत् ।
देयाः सर्वे रसास्तस्मा आत्मनः शुभमिच्छता ॥
पूरयित्वा हविष्येण यतये यः प्रयच्छति ।
पात्रं स उद्धरेत्पूर्वानपि ये नरकाश्रिताः ॥
यावन्ति यतिपात्राणि यावच्चान्नं प्रयच्छति ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥
संवर्तः—ब्रह्मचारियतीनां च वपनं यस्तु कारयेत् ।
नखकर्मादि कुर्वाणश्चक्षुष्माञ्जायते नरः ॥
क्रतुः—न क्रिया(यां) गोत्रमाचारं शौचाशौचं शुभाशुभम् ।
पृच्छेन्माधूकरायाते कुलं शीलं श्रुतं यतेः ॥
आश्रमेषु यतिर्यस्य मुहूर्तमपि विश्रमेत् ।
किं तस्यान्येन धर्मेण कृतकृत्यो हि स स्मृतः ॥
जन्मप्रभृति यत्पापं गृहस्थेन तु संचितम् ।
तत्सर्वं नाशयत्याशु एकरात्रोषितो यतिः ॥
यतिर्योगी ब्रह्मचारी शतायुः सत्यवाक्सती ।
सत्री वदान्यः शूरश्च स्मृताः शुद्धाश्च ते सदा ॥
क्रतुः—व्याधितानां तु भिक्षूणां कुर्यादाराममण्डपम् ।
पथ्याद्यैः परिचर्यां च भेषजैर्य उपाचरेत् ॥
किं तस्यान्येन धर्मेण स्वर्गे सोऽमृतपो भवेत् ।
यतिप्राप्यं प्राप्य लोकं सोऽनन्तसुखमश्नुते ॥
अदुष्टापतितं विप्रं यतिर्यः परिवर्जयेत् ।
स तस्य सुकृतं दत्त्वा दुष्कृतं प्रतिपद्यते ॥
तथैव च गृहस्थस्य निराशो भिक्षुको व्रजेत् ।
इष्टं दत्तं तपोऽधीतं सर्वमादाय गच्छति ॥
संचितं यद्गृहस्थस्य पापमामरणान्तिकम् ।
निर्दहिष्यति तत्सर्वमेकरात्रोषितो यतिः ॥
यतिर्यस्य गृहे भुङ्क्ते तस्य भुङ्क्ते स्वयं हरिः ।
हरिर्यस्य गृहे भुङ्क्ते तस्य भुङ्क्ते जगत्त्रयम् ॥
वटौ तु समदत्तं स्याद्गृहस्थे द्विगुणं स्मृतम् ।
वानप्रस्थे शतगुणं यतौ दत्तमनन्तकम् ॥

---

१ घ. विनृन्स । २ क. ख. प्रतिष्ठितम् । ता० ।

कुर्यादावसथं यस्तु दद्याद्वा यतये[1]ऽण्वपि ।
ज्ञानिने तु विशेषेण स याति ब्रह्मणः पदम् ॥
यतिहस्ते जलं दद्याद्भिक्षां दद्यात्पुनर्जलम् ।
तद्भैक्षं मेरुणा तुल्यं तज्जलं सागरोपमम् ॥
चातुर्मास्यं यतीनां तु यः कारयति धर्मवित् ।
स यात्यैहिकमैश्वर्यमामुष्मिकसुखं महत् ॥

विष्णुः—भिक्षादाने सदा भिक्षोः सलिलं दक्षिणे करे ।
दत्त्वा भिक्षां प्रयच्छेत्तु[2] पात्रे सव्यकरे स्थिते ॥

अत्रिः—भिक्षां सत्कृत्य[3] यो दद्याद्विष्णुरूपाय भिक्षवे ।
कृत्स्नां वा पृथिवीं दद्यात्तेन तुल्यं न तत्फलम् ॥

[*नारदः—यतीनां पादयोः सम्यग्विष्णुसूक्तेन सिञ्चति ।
ते नरा विष्णुसायुज्यं प्राप्नुवन्ति न संशयः ॥

भृगुः—मौलौ तु सर्वे देवाश्च येषां तिष्ठन्ति निश्चितम् ।
अङ्गुष्ठाग्रे तु विष्णुश्च लक्ष्म्या सहापि तिष्ठति ॥

वसिष्ठः—विना पुरुषसूक्तेन अभिषिञ्चति यः पुमान् ।
त्रयाणामपि लोकेषु वास्तव्यं नाऽऽप्नुवन्ति ते ॥]

हारीतः—सर्वेषामपराधानां यतिनिन्दा गरीयसी ।
यतिर्नारायणः साक्षात्तस्मात्तां परिवर्जयेत् ॥

बौधायनः—यतिमागतं स्वागतमित्युक्त्वाऽभ्युत्थायाऽऽसनं पादशौचमभ्यञ्जनं च दत्त्वा कुशलमभिभाष्योपासीत । काले त्वन्नं भैक्षमुपाहरेत्स तस्योपचार इति ।

ब्रह्माण्डपुराणे—काले वा यदि वाऽकाले श्राद्धं कुर्यादतन्द्रितः ।
पितॄणां तृप्तिकामस्तु[4] यतीन्प्राप्य द्विजोत्तमः ॥

दक्षः—विना मांसेन मधुना विना दक्षिणयाऽऽशिषा ।
परिपूर्णं भवेच्छ्राद्धं यतिषु श्राद्धभोजिषु ॥

पराशरः—+अपचन्तं परित्यज्य पचन्तं यस्तु भोजयेत् ।
तच्छ्राद्धमासुरं प्रोक्तं तत्कर्ता नरकं व्रजेत् ॥

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. पुस्तके वर्तते । + इदं पराशरवचनं ग. घ. पुस्तकयोर्नास्ति ।

१ न. घ. °ये अपि । २ घ. प्रयच्छेत । ३ ग. सत्कृत्य । ४ ग. दत्तका° ।

स्कन्दपुराणे शिववाक्यम्—

ब्रह्मा विष्णुश्च रुद्रश्च ससाध्या मरुतस्तथा ।
सकृद्भुक्तेन यतिना पितृदेवाः सवासवाः ॥
सर्वे ते तृप्तिमायान्ति दश वर्षाणि पञ्च च ।
जन्मकोटिसहस्रेषु पूजितस्तेन शंकरः ॥
गृहे यस्य समायाति महाभागवतो यतिः ।
यतिभिः पूज्यमानैस्तु सर्वे देवाः सुपूजिताः ॥
अपमाने कृते तेषां देवाः सर्वेऽपमानिताः ।
यो वै यतीननादृत्य भोजयेदितरान्द्विजान् ॥
[ * विजानन्वसते(ति) ग्रामे कव्यं तद्याति राक्षसान् ।
अलाभे ध्यानभिक्षूणां भोजयेद्ब्रह्मचारिणम् ॥
तदलाभेऽप्युदासीनं गृहस्थमपि भोजयेत् ।
सदोषं निर्गुणं वाऽपि यतिं पुत्रं न कीर्तयेत् ॥
अज्ञानात्कीर्तयेद्यस्तु स याति नरकं ध्रुवम् ।
येनापमानितो भिक्षुस्तेनाहं चापमानितः ॥
हरिर्ब्रह्मादयो देवाः पितरो मुनयस्तथा ।
आगच्छन्तु(न्ति) सुराः सर्वे ऋषयो मुनिपुंगवाः ॥
तीर्थानि क्रतवः सर्वे भिक्षुके गृहमागते ।
यतिर्यस्य गृहस्थस्य संतुष्टो वसते गृहे ॥
तुष्टो भवति दैत्यारिर्यावदाभूतसंप्लवम् ।
ये नमन्ति यतिं दूराद्दृष्ट्वा काषायवाससम् ॥
राजसूयफलावाप्तिस्तेषां भवति पुत्रक ।
यतिरूपेण सर्वत्र विष्णुः पर्यटते महीम् ॥
भक्तानामनुकम्पार्थं महद्धर्मविवृद्धये ।
यदा कारयति स्नानं यतीनां यो द्विजोत्तमः ॥
स्नानजं लभते पुण्यं गङ्गायाः शतवार्षिकम् ।
कौपीनाच्छादनं दण्डं बहिर्वासश्च पादुके ॥
यो ददाति यथाशक्त्या पुण्यं तस्य वदाम्यहम् ।
दत्तं वाजिसहस्रं तु मातङ्गानां शतत्रयम् ॥
गोयुतस्य सहस्रस्य फलं प्राप्नोति मानवः ।
कौपीनाच्छादनं पात्रं भिक्षुकेभ्यः प्रयच्छति ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो ग. पुस्तके नास्ति।

वाजपेयसमं पुण्यं विष्णुमुद्दिश्य यत्कृतम् ।
ध्यानभिक्षुमतिक्रम्य यद्यन्यं भोजयेद्गृही ॥
न तत्फलमवाप्नोति सर्वं गोत्रं प्रतापयेत् ।
मुण्डं यतेन्द्रियं शान्तं ध्यानभिक्षुमकिल्बिषम् ॥
तं नित्यं भोजयेच्छ्राद्धे दैवे पित्र्ये च कर्मणि ।
अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः ॥
दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत नित्यशः ।
पक्वान्नस्वामिको भिक्षुर्यदि तस्मै न दीयते ॥
चान्द्रायणेन शुद्धिः स्यादिति च स्मृतिशासनम् ।
यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ॥
तयोरन्नमदत्त्वा तु भुक्त्वा चान्द्रायणं चरेत् ।
लक्षलक्षाणि यो दद्याद्ब्राह्मणे वेदपारगे ॥
तथा तत्त्वविदे भिक्षां तयोस्तुल्यं फलं भवेत् ।
संन्यासदिवसे यस्य यतिर्भैक्षं समाचरेत् ॥
पुत्रं स लभते श्रेष्ठं सफलं तस्य जीवितम् ।
द्वितीयदिवसेऽप्येवं तृतीयेऽप्येवमेव हि ॥
अतस्त्रिदिनमध्ये तु यतिर्भोज्यः प्रयत्नतः ।

पराशरः—अकृते वैश्वदेवे तु भिक्षुके गृहमागते ।
उद्धृत्य वैश्वदेवान्नं भिक्षुकं तु विसर्जयेत् ॥
यतिश्च ब्रह्मचारी च विद्यार्थी गुरुपोषकः ।
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः ॥
वैश्वदेवकृतं दोषं भिक्षुः शक्तो व्यपोहितुम् ।
न हि भिक्षुकृतं दोषं वैश्वदेवो व्यपोहति ॥
निवेशयति यः श्राद्धे पितृकर्मणि भिक्षुकम् ।
आकल्पकालिकी तृप्तिः पितॄणामुपजायते ॥ *

* उपजायत इत्युत्तरमयं ग्रन्थः क. पस्तके वर्तते—
गौतमः–श्राद्धे पाकं च निष्पत्ति अन्ये च पर्वणिस्तथा । यतीनां च भिक्षां दत्त्वा कोटिपुण्यफलं लभेत् ।
शेषमन्नं गृहस्थानां सोमपानसम भवेत् । माधूकरी करपात्री गोमुखस्तथैव च ॥
तेषां भिक्षा पूर्णजाता शेषान्नममृतोपमम् । देवानां च पितॄणां च यज्ञानां च तथैव च ॥

१ ग. तत्कृ° । २ ग. देवाकृ° ।

बौधायनः—ब्रह्मनिष्ठे च संन्यस्ते पितर्युपरते श्रुते ।
सपिण्डीकरणं नैव नाशौचं नोदकक्रिया ॥
अहन्येकादशे प्राप्ते पार्वणं तु विधीयते ।
सपिण्डीकरणं नैतत्कर्तव्यं तु सुतादिभिः ॥
सद्यः संन्यसनादेव प्रेतत्वं नैव जायते ।
एकोद्दिष्टं न कर्तव्यं संन्यस्तानां कदाचन ॥

शौनकः—ब्रह्मीभूते च संन्यस्ते ताते च निधनं गते ।
न तस्य सूतकं कार्यं न च पिण्डोदकक्रियाः ॥
ब्रह्मीभूतस्य तस्यात्र कर्तव्यं नैव विद्यते ।
दशाहे तु व्यतिक्रान्ते पुत्रः कुर्यात्तु पार्वणम् ॥
प्रत्यब्दं पार्वणं कुर्यादेष धर्मः * सनातनः ।

अत्र केचित्पार्वणैकोद्दिष्टयोरन्यथा व्यवस्थामाहुः—
प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ ।
कुर्यातामितरे कुर्युरेकोद्दिष्टं सुता दश ॥

इति जातूकर्ण्यवचनात् ।
द्वादशाहमनध्यायं कुर्याच्छिष्यः समाहितः ।
खननं वहनं स्पर्शं संस्कुर्वञ्छुद्धिमृच्छति ॥
स्नानमात्रेण लभते अश्वमेधं पदे पदे ।
अपुत्रो लभते पुत्रं चिरंजीवितमुत्तमम् ॥
निषेकादिश्मशानान्ता विधयो ब्राह्मणाश्रिताः ।
तस्माद्यतेस्तु संस्कारं मन्त्रैर्वित्कुरुते गृही ॥
यतिदेहं गृही स्पृष्ट्वा स्नानमात्रेण शुध्यति ।
अश्वमेधफलं सर्वं संप्राप्नोति पदे पदे ॥
असंस्कृतं विशीर्येत यत्र देशे कलेवरम् ।
धर्मलोपो भवेत्तत्र दुर्भिक्षं मरणादिकम् ॥

एतेषां च परं भुक्त्वा उभये स्वर्गगामिनः । कदा चैव पुरोहित्ये दाता चैव विकल्पितः ॥
उभये नरकं यान्ति यावच्चन्द्रदिवाकरौ । गृहस्थ(स्थो) विमुखो जात उत्कटं पातकं भवेत् ॥
सप्तजन्मदरिद्रश्च दशजन्मसु सूकरः । यतिदर्शनमात्रेण पापराशिर्विलीयते ॥
भोजनाच्छादनं दत्त्वा च स्वर्गमाप्नुयात् ।

* इत आरभ्य जातूकर्ण्यवचनादित्यन्तो ग्रन्थो घ. पुस्तके वर्तते ।

१ क. ग. °न्त्रवत्कु° । २ क. सर्वे प्राप्नुवन्ति प° ।

[ * इति यतिसेवामहिमा । अथ यतिमरणे कर्तव्यताविधिः ]

( + तथा चोक्तं पितृमेधपद्धतौ—

संनिकृष्टो यतेः पुत्रो यदि स्वपितृनाशने ।
कृत्वा तु वपनं स्नात्वा शुद्धात्मा यति[1]संस्क्रियाम् ॥
असंनिकृष्टश्चेत्पुत्रः सिद्धिवार्तां पितुस्तदा ।
स्नात्वा वपनपूर्वं तु शुक्लायां तदनन्तरम् ॥
दशम्यामेव कुर्यात्तु नारायणबलिं सुतः । )

उशना—यतौ मृते न वपनं नोदकं नैव च क्रिया ॥
नाशौचं नैव शोकश्च बन्धूनां गोत्रिणामपि ।
वृषोत्सर्गं न दाहं च विपन्ने स्याद्गुरौ यतौ ॥
सपिण्डीकरणं तेषां न कर्तव्यं सुतेन तु ।
एकोद्दिष्टं न कुर्वीत यतीनां तु कदाचन ॥
मृते न दहनं कार्यं परहंसस्य सर्वदा ।
[ × सुतैश्च वपनं कार्यं परहंसस्य सर्वदा ॥
कर्तव्यं खननं तस्य नाशौचं नोदकक्रिया ।]
अश्वत्थस्थापनं कार्यं तद्देशेऽध्वर्युणा मुने ॥
अश्वत्थे स्थापिते तेन स्थापितो हि महेश्वरः ।
दर्शनात्स्पर्शनात्तस्य सर्वं नश्यति पातकम् ॥
कुटीचकं संप्रदहेद्बहूदकं जले क्षिपेत् ।
हंसं चैव तु निक्षिप्य परहंसं विकीरयेत् ॥

बौधायनः—यतीनामन्त्यसंस्कारविधिं व्याख्यास्यामः । गृहस्थः शुद्धात्माऽशेषतः स्नात्वा गन्धपुष्पादिभिरलंकृत्य शिक्ये शरीरमारोप्य घोषितं जयशब्दैर्दुन्दुभीनां रवैरपि ग्रामात्प्राचीमुदीचीं गत्वा शुद्धदेशं समाश्रयेत् । नदीतीरेऽश्वत्थवृक्षस्य ब्रह्मवृक्षस्य वाऽधस्ताद्देवयजनं दण्डायामप्रमाणं खनित्वा लवणं प्रक्षिप्य दर्भान्संस्तीर्य गायत्र्या शरीरं प्रक्षाल्य पुरुषसूक्तेन स्नापयित्वा शङ्खेन प्रणवेन शतसंख्येन स्नाप्य षोडशोपचारैर्गन्धपुष्पैरलंकृत्य "विष्णो हव्यꣳ रक्षस्व" इति शरीरं कुण्डे

* धनुश्चिह्नान्तर्गतो ग्रन्थो घ. पुस्तके वर्तते । + वर्तुलकंसस्थितो ग्रन्थो घ. पुस्तके नास्ति ।
× धनुश्चिह्नान्तर्गतो ग्रन्थो घ. पुस्तके वर्तते ।

[1] ग. °ति सत्क्रियाम् ।

निधाय "इदं विष्णुर्विचक्रमे" इति दक्षिणहस्ते दण्डं भङ्क्त्वा निधाय "हंसः शुचिषत्" इति हृदयदेशे जपेत् । "ब्रह्म जज्ञानम्" इति मूर्धा(र्ध)देशे जपेत् । पुरुषसूक्तेन भ्रुवोर्मध्ये जपेत् । "ॐ भूमिर्भूमिमगान्माता मातरमप्यगात् । भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम् ।" इति मन्त्रेण मूर्धानं भिन्द्यादश्मना परशुना वा । ॐ भूर्भुवः स्वरोमित्यभिमन्त्र्य दर्भैराच्छाद्य मध्ये लवणेन घनतरेण सप्तव्याहृतिभिः प्रणवेन च देवयजनं पूरयेत् । "अग्निनाऽग्निः समिध्यते" इत्यनुमन्त्रयेत् । न तत्र शेषसंस्कारोऽस्ति । अन्यथा ग्राम्यादिभक्षणेऽनावृष्टिर्भवति । तस्माद्भूमिं भृशं खात्वा मृदाऽऽच्छादयेत् ।

सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च ।
न तस्य दहनं कार्यं नाशौचं नोदकक्रिया ॥
निदध्यात्प्रणवेनैव ध्यानभिक्षोः कलेवरम् ।
प्रोक्षणं खननं चैव सर्वं तेनैव कारयेत् ॥
यतीन्वहन्स्पृशंश्चैव स्नानमात्रेण शुध्यति ।
अश्वमेधफलं सर्वे प्राप्नुवन्ति पृथक्पृथक् ॥
एकोद्दिष्टं जलं पिण्डं नाशौचं प्रेतसत्क्रियाम् ।
न कुर्यात्पार्वणादन्यद्ब्रह्मीभूताय कल्पते ॥

कपिलः—वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते तथा ।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात्सुतः स्वयम् ॥
यतेः कार्याः क्रियास्तस्य यस्य न ब्रह्मणि स्थितिः ।
ब्रह्मीभूतस्य तु यतेर्न दाहाद्याः कथंचन ॥

अथ कुटीचकविधिः । पुत्रैः कुटीचकस्य त्वज्ञानिनो दहनादिकः क्रियाकलापः कार्य एव कुतः—

संनिकृष्टे यतौ येषां पितर्युपरते सुतैः ।
दहनं तस्य कर्तव्यं श्राद्धपिण्डोदकक्रियाः ॥ इति स्मृतेः ।
अनग्नेर्दहनं कार्यं पूर्वभिक्षोर्यथाविधि ।
विदुषस्तु न तत्कार्यं नैकोद्दिष्टादि कर्हिचित् ॥

पूर्वभिक्षुः कुटीचकः ।

१ घ. °न वाद° । २ २ क. °त्र देशसं° । ३ ख. °चं नोदकक्रिया । ४ ख. भिक्षवे । ५ ग. घ. क्रिया यस्य यतेर्ब्रह्मणि संस्थितः । ६ ग. तस्य । घ. तेषां ।

बौधायनः—नारायणबलिं चास्य कुर्वीत द्वादशेऽहनि ।
कुर्याद्विष्णोर्महापूजां पायसं च निवेदयेत् ॥
अग्नौ हुत्वा तु तच्छेषं व्याहृतिभिः समाहितः ।
यतीन्गृहस्थान्साधून्वा गृहीत्वा द्वादशावरान् ॥
अभ्यर्च्य गन्धपुष्पाद्यैर्मन्त्रैर्द्वादशनामभिः ।
संभोज्य हव्येनान्नेन दक्षिणां च निवेदयेत् ॥
त्रयोदशं द्विजश्रेष्ठमात्मसंज्ञं यतेन्द्रियम् ।
विष्णुं यथा तथाऽभ्यर्च्य पाद्यार्घ्याद्यैर्विधानतः ॥
दद्यात्पुरुषसूक्तेन पुण्यहव्यादिकं क्रमात् ।
वस्त्रालंकारकाद्यानि यथाशक्ति प्रदापयेत् ॥
उच्छिष्टसंनिधौ तस्य दर्भानास्तीर्य भूतले ।
ॐ भूः स्वधों भुवः स्वधों स्वः स्वधेति बलीन्हरेत् ।
एवं यः कुरुते विद्वान्नारायणबलिं द्विजः ।
विष्णुलोकमवाप्नोति पुरुषो नात्र संशयः ॥

*इति श्रीपरमहंसपरिव्राजकविश्वेश्वरसरस्वतीभिः संगृहीते यतिधर्मसमुच्चये यतिपूजाफलम् ॥

---

इदानीं यतीनां माधूकरादिव्यतिरिक्तान्ने दोषदर्शकानि वचनानि लिख्यन्ते ।

आदित्यपुराणे—भैक्षेण वर्तयेन्नित्यं नैकान्नादी भवेत्क्वचित् ।
एकान्नादी भवेद्यस्तु कदाचिल्लम्पटो यदि ॥
निष्कृतिर्नैव तस्यास्ति धर्मशास्त्रेषु सर्वदा ।
परान्नं नैव गृह्णीयाद्भिक्षुः स्वाश्रमपालकः ॥
परान्नवर्जनादेव भिक्षुर्भिक्षुरिति स्मृतः ।
अप्येकपङ्क्त्या नाश्नीयात्संयुक्तः स्वजनैरपि ॥
को हि जानाति किं कस्य प्रच्छन्नं पातकं भवेत् ।
भस्मस्तम्भजलद्वारमार्गैः पङ्क्तिं च भेदयेत् ॥
यतिश्राद्धे तथैकान्ने रागाद्यस्तु प्रवर्तते ।
नाममात्रो भवेद्भिक्षुः स एव परवञ्चकः ॥

---

* इत आरभ्य पूजाफलमित्यन्तो ग्रन्थो घ. पुस्तके नास्ति ।

---

१ ग. संपूज्य ।

परान्नविमुखो भिक्षुः परं ज्ञानमवाप्नुयात् ।
तस्मात्परित्यजेद्भिक्षुः परान्नं नृपदण्डवत् ॥
श्रवणं ब्रह्मचर्यं च वैराग्यं ज्ञानमेव च ।
चत्वार्येतानि नश्यन्ति परान्ननिरतस्य वै ॥

अथ संन्यासिनां श्राद्धभोजननिषेधप्रकरणं महाभारते नारदः—

हव्यं कव्यं च राजेन्द्र नाश्नीयादात्मवान्यतिः ।
हव्यकव्यपरो भिक्षुः पतत्येव न संशयः ॥

आपस्तम्बः—श्राद्धभोजी यतिर्नित्यमाशु गच्छति शूद्रताम् ।
तादृशं कल्मषं दृष्ट्वा सचैलो जलमाविशेत् ॥

जैमिनिः—श्राद्धान्नं यस्य कुक्षौ तु मुहूर्तमपि वर्तते ।
भिक्षोश्चत्वारि नश्यन्ति आयुः प्रज्ञा यशो बलम् ॥

मेधातिथिः—भवत्स्वावाहयामीति यावदुच्चारयेद्द्विजः ।
तावत्प्रेतत्वमाप्नोति भिक्षुः सुकृतसंक्षयात ॥

बृहस्पतिः—श्रवणं मननं ध्यानं ज्ञानं स्वाध्याय एव च ।
सद्यो निष्फलतां याति सकृच्छ्राद्धान्नभोजनात् ॥
अन्तःकरणशुद्धिस्तु न तस्यैव तु सर्वदा ।
तदन्नं प्रेतयोग्यं च भवेत्संकल्पमात्रतः ॥
तीर्थश्राद्धममाश्राद्धमष्टका पार्वणं तथा ।
मासि श्राद्धं गयाश्राद्धमेकोद्दिष्टं महालयम् ॥
अवश्यं भिक्षुरेतानि वर्जयेत्परदारवत् ।
संक्रान्तौ पर्वणि शुभे व्यतीपाते च वैधृतौ ॥
एकान्नं च यतिर्भुक्त्वा ऐन्दवं तद्विशोधनम् ।
यत्यन्नं ब्रह्मच(चा)र्यन्नमवीरान्नं तथैव च ॥
शूद्रान्नं च सदा भिक्षुर्वर्जयेत्परदारवत् ।
चरन्माधूकरीं वृत्तिं यतिर्म्लेच्छकुलादपि ॥
एकान्नं तु न भुञ्जीत बृहस्पतिसमादपि ।
भैक्षं वा सर्ववर्णभ्य एकान्नं वा द्विजातिषु ॥
न चैकान्नं द्विजेषु स्यात्कामं स्यात्सार्ववर्णिकम् ।
भिक्षार्थं च पृथक्पक्वं यत्संस्कारविवर्जितम् ॥
तदन्नं सर्वथा त्याज्यं यतीनां मेध्यवद्भवेत् ।

१ ख. ग. संक्रमे ।

माधूकरादिव्यतिरिक्तान्नदोषे कारणमाह पराशरः—

अन्नदोषेण चित्तस्य कालुष्यं सर्वदा भवेत् ।
कलुषीकृतचित्तानां धर्मः सम्यङ्न भासते ॥
अधर्मो धर्मरूपेण विभाति च न संशयः ।
स्वयं भाति परं ब्रह्म न भाति चावभासते ॥
ब्रह्मविद्याभिवाञ्छा च कदाचिन्नैव जायते ।
मणिमन्त्रौषधैर्वह्निः सुदीप्तोऽपि यथेन्धनम् ॥
प्रदग्धुं नैव शक्तः स्यात्प्रतिबन्धस्तथैव च ।
ज्ञानाग्निरपि संजातः सुदीप्तः सुदृढोऽपि वा ॥
प्रदग्धुं न च शक्तः स्यात्प्रतिबन्धस्तु किल्बिषम् ।

प्रतिबन्धो नाम दुष्टान्नासत्यभाषणनिन्दाविषयलाम्पट्यमित्यादि ।

तदुक्तम्—कर्तव्याऽऽशयशुद्धिस्तु भिक्षुकेण विशेषतः ।
ज्ञानोत्पत्तिनिमित्तत्वात्स्वातन्त्र्यकरणाय च ॥

तथा च श्रुतिः—"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" [छान्दो० ७।२६।२] इति ।

आत्मसंमितमाहारमाहरेदात्मवान्यतिः ।
अत्यन्तक्षुधितस्यापि समाधिर्नैव जायते ॥
मिताशनो भवेन्नित्यं भिक्षुर्मोक्षपरायणः ।
कामक्रोधादयो दोषा न भवन्ति मिताशनात् ॥
अङ्गसङ्गाद्बलं दर्पो विषयासक्तिरेव च ॥
कामः क्रोधस्तथा लोभः पतनं नरके ध्रुवम् ।
तावज्जितेन्द्रियो न स्याद्विजितान्येन्द्रियः पुमान्—
न जयेद्रसनं यावज्जितं सर्वं जिते रसे ।
स्तोकं स्तोकं ग्रसेद्ग्रासं देहो वर्तेत यावता ॥
गृहान्न हिंसेन्नातिष्ठेद्वृत्तिं माधूकरीं मुनिः ॥
प्राणवृत्त्यैव संतुष्येन्मुनिर्नैवेन्द्रियप्रियैः ।
ज्ञानं तथा न नश्येत नावकीर्येत वाङ्मनः ॥
हितं मितं सदाऽश्नीयाद्यत्सुखेनैव जीर्यते ।
धातुः प्रकुप्यते येन तदन्नं वर्जयेद्यतिः ॥
याचितायाचिताभ्यां च भिक्षाभ्यां कल्पयेत्स्थितिम् ।

---

१ घ. कल्मषं । २ ग. घ. °ताशिनः । अ°।

याचितं माधूकरादि । अयाचितं प्राक्प्रणीतादि । ननु भैक्षं पञ्चविधं स्मृतमिति च यद्यपि विहितं तथाऽपि निवृत्तिरेव श्रेयसीत्याह—

प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफलेत्यादि । निवृत्तं कर्म सेवेतेति । यमान्सेवेत सततमित्यादिना ।

[ *परपाकनिवृत्तस्य परपाकरतस्य च ।
अपचस्य यदन्नं तु भुक्त्वा चान्द्रायणं चरेत् ॥
गृहीत्वाऽग्निं समारोप्य पञ्च यज्ञान्न निर्वपेत् ।
परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्तितः ॥
पञ्च यज्ञान्स्वयं कृत्वा परान्नमुपजीवति ।
सततं प्रातरुत्थाय परपाकरतस्तु सः ॥
गृहस्थधर्मवृत्तो यो दानेन परिवर्जितः ।
ऋषिभिर्धर्मतत्त्वज्ञैरपचः परिकीर्तितः ॥

अत्र भिक्षाप्रशंसा पूर्ववत् ] ( +इदानीं भिक्षाप्रशंसा—

न भिक्षायां भवेद्दोषो नैव भिक्षा प्रतिग्रहः ।
सोमपानसमा भिक्षा तस्मादहरहश्चरेत् ।
भिक्षा माधूकरी नाम सर्वपापप्रणाशनी ॥
अवधूता च पूता च सोमपानं दिने दिने ।
श्रोत्रियान्नं च भैक्षं च हुतशेषं तु यद्धविः ॥
नखाग्राच्छोधयेत्पापं तुषाग्निरिव काञ्चनम् ।
गङ्गायाः सलिलं पुण्यं शालग्रामशिला तथा ॥
भिक्षान्नं पञ्चगव्यं च पवित्राणि युगे युगे ।

कण्वः—अब्बिन्दुं यः कुशाग्रेण मासि मासि समश्नुते ।
निरपेक्षस्तु भिक्षाशी स तु तस्माद्विशिष्यते ॥
तप्तकाञ्चनवर्णेन गवां मूत्रेण यावकम् ।
पिबेद्द्वादश वर्षाणि न तद्भैक्षसमं भवेत् ॥
शाकभक्षाः पयोभक्षा ये च यावकभक्षकाः ।
सर्वे ते भैक्षभक्षस्य कलां नार्हन्ति षोडशीम् ॥

श्रुतिरपि—" कामक्रोधलोभमोहदम्भदर्पाहंकारममकारानृतादींस्त्यजेत्। [ आ० ४ ] चतुर्षु वर्णेषु भैक्षं चरेदभिशस्तपतितवर्जं पाणिपात्रेऽ-

* धनुश्चिह्नान्तर्गतो ग्रन्थो घ. पुस्तके वर्तते । + वर्तुलकंसस्थितो ग्रन्थो घ. पुस्तके नास्ति ।

शनं कुर्यादौषधवत्प्राश्नीयात्प्राणसंधारणार्थं यथा मेदोवृद्धिर्न जायतेऽरण्यनिष्ठो भिक्षार्थी ग्रामं प्रविशेत् [ काठकब्रा० ] ।) इदानीं यतिभिरशनवसनादिचिन्ता न कार्या । किं प्रारब्धकर्मणामवश्यंभावित्वादित्याह—

अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ।
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ॥

भारते—भवितव्यं यथा येन न तद्भवति[1] चान्यथा ।
नीयते तेन मार्गेण स्वयं वा तत्र गच्छति ॥

प्राप्तव्यमर्थं लभते मनुष्यो देवोऽपि तं वारयितुं न शक्तः ।
तस्मान्न शोचामि न विस्मयो मे यदस्मदीयं नहि तत्परेषाम् ॥

अरक्षितं[2] तिष्ठति दैवरक्षितं गृहे स्थितं दैवहतं विनश्यति[3] ।
जीवत्यनाथोऽपि वने विसर्जितः कृतप्रयत्नोऽपि गृहे न जीवति ॥

लिखिता चित्रगुप्तेन ललाटेऽक्षरमालिका ।
न सा मार्जयितुं शक्या पण्डितैस्त्रिदशैरपि ॥
नाऽऽहारं चिन्तयेत्प्राज्ञो धर्ममेकं तु चिन्तयेत् ।
आहारोऽपि मनुष्याणां जन्मना सह जायते ॥
यो वै गर्भगतस्यापि वृत्तिं कल्पितवान्प्रभुः ।
शेषवृत्तिविधानाय स किं सुप्तोऽथवा मृतः ॥
अवश्यंभाविभावानां प्रतीकारो भवेद्यदि ।
तदा दुःखैर्न लिप्येरन्नलरामयुधिष्ठिराः ॥
अवश्यंभाविनोऽप्यर्थाः स्वधर्मफलहेतवः ।
तान्न सन्तोऽनुशोचन्ति शास्त्रतत्त्वार्थवेदिनः ॥
यदभावि न तद्भावि यद्भावि न तदन्यथा ।
इति चिन्ताविषघ्नोऽयं बोधो भ्रमनिवर्तकः ॥
यस्य यद्दैवविहितं स तेन सुखदुःखयोः ।
आत्मानं तोषयेद्देही तमसः पारमृच्छति ॥
येनैव यद्यथा पूर्वं कृतं कर्म शुभाशुभम् ।
स एव तत्तथा भुङ्क्ते दुःखं वा यदि वा सुखम् ॥
यस्य यस्य यथा कर्म तस्य तस्य तथा मतिः ।
पुण्यपापाश्रितो भावो जायते प्राणिनां प्रिये ॥

---

१ क. ग. °ति नान्य° । २ घ. वने स्थितं । ३ ग. °हे विनश्यति ।

देवत्वमथ मानुष्यं पशुत्वं पक्षिता यथा[1] ।
तिर्यक्त्वं स्थावरत्वं च याति जन्तुः स्वकर्मभिः ॥
अन्यथा चिन्तिता ह्यर्था नरैराशापरायणैः ।
अन्यथैव हि गच्छन्ति दैवादिति मतिर्मम ॥
कर्मदायादवाँल्लोकः कर्मसंबन्धिबान्धवाः ।
कर्माणि चोदयन्तीह पुरुषं सुखदुःखयोः ॥
यद्यावद्यादृशं येन कृतं कर्म शुभाशुभम् ।
तत्तावत्तादृशं तस्य फलमीशः प्रयच्छति ॥
यस्यां यस्यामवस्थायां यद्यत्कर्म पुरा कृतम् ।
तस्यां तस्यामवस्थायां तत्तत्फलमुपाश्नुते ॥
जन्मजन्मन्यदभ्यस्तं दानमध्ययनं तपः ।
तेनैवाभ्यासयोगेन तत्रैवाभ्यसते पुनः ॥

इदानीं भिक्षुकैर्निवृत्तिनिष्ठायामेवाऽऽदरः कार्यो न तु प्रवृत्तिनिष्ठाया-मित्याह—तत्र निवृत्तिनिष्ठानामद्वैताभिनिवेशः । प्रवृत्तिनिष्ठानां तु द्वैताभिनिवेश इति ।

उक्तं च—अद्वैतभावमाश्रित्य द्वैताचारेण वर्तते ।
रुदन्ति पितरस्तस्य हा कष्टं पतितं पुनः ॥
यमान्सेवेत सततं न नित्यं नियमान्बुधः ।
यमान्पतत्यकुर्वाणो नियमान्केवलान्भजन् ॥
शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि ।
श्रमस्तस्य[2] श्रमफलो[3] ह्यधेनुमिव रक्षतः ॥
वाचं यच्छ मनो यच्छ प्राणं यच्छेन्द्रियाण्यपि ।
आत्मानमात्मना यच्छ न भूयः कल्पसेऽध्वने ॥
यो वै वाङ्मनसी सम्यगसंयच्छान्धिया यतिः ।
तस्य व्रतं तपो ज्ञानं स्रवत्याशु घटाम्बुवत् ॥
निवृत्तं कर्म सेवेत प्रवृत्तं मत्परस्त्यजेत् ।
जिज्ञासायां संप्रवृत्तो नाऽऽद्रियेत्कर्मचोदनाम् ॥
त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् ।
त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ॥

१ घ. तथा । २ क. भ्रमस्त° । ३ क. °स्य भ्रमफ°

नात्यक्त्वा सुखमाप्नोति नात्यक्त्वा विन्दते परम् ।
नात्यक्त्वा निर्भयः शेते सर्वं त्यक्त्वा सुखी भवेत् ॥
यतो यतो निवर्तेत विमुच्येत ततस्ततः ।
निवर्तनाद्धि सर्वत्र सुखमक्षयमश्नुते ॥
त्यजतः संचयान्सर्वान्यान्ति नाशमुपद्रवाः ।
न हि संचयवान्कश्चिद्दृश्यते निरुपद्रवः ॥
नातः सुखतरं किंचित्त्रिषु लोकेषु विद्यते ।
वीततृष्णस्य कामेभ्यो मुक्तसङ्गस्य यत्सुखम् ॥
नान्यत्र[1] विद्यातपसो नान्यत्रेन्द्रियनिग्रहात् ।
नान्यत्र सर्वसंत्यागात्तं मोक्षं विन्दते परम् ॥
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥
सर्वत्र संपदस्तस्य संतुष्टं यस्य मानसम् ।
उपानद्गूढपादस्य ननु चर्मावृतैव[3] भूः ॥
अकिंचनस्य दान्तस्य शान्तस्य समचेतसः ।
मया संतुष्टमनसः सर्वाः सुखमया दिशः ॥
दानमिज्या तपः शौचं तीर्थं वेदाः श्रुतं तथा ।
अशान्तमनसः पुंसः[2] सर्वमेतदपार्थकम् ॥
शमार्थे[4] सर्वशास्त्राणि विहितानि मनीषिभिः ।
तस्मात्स सर्वशास्त्रज्ञो यस्य शान्तं मनः सदा ॥
चीरवासा जटी वाऽपि त्रिदण्डी मुण्ड एव च ।
वृथा क्लेशाय विप्रेन्द्र यस्य शान्तं न मानसम् ॥
यदि यासि महीरन्ध्रं ब्रह्मलोकमथापि वा ।
तन्न निर्वृतिमाप्नोषि विनैवोपशमामृतम् ॥
यत्कृतं न विरागाय न धर्माय न शान्तये ।
सुश्लक्ष्णमपि शक्तेन काकवाशितमेव तत् ॥
ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः ।
सर्व एव शमेनैव प्राप्नुवन्ति परां गतिम् ॥
किंचिदेव ममत्वेन यदा भवति कल्पितम् ।
तद्भवेत्परितापाय सर्वं संपद्यते तदा ॥

१ क. °न्यत्रासंशयत्या° । २ ग. पुमान् । ३ ग. घ. °र्मास्तृतै° । ४ ग. सामर्थ्ये ।

नातिस्नेहः प्रसङ्गो वा कर्तव्यः क्वापि केनचित् ।
कुर्वन्विन्देत संतापं कपोत इव दीनधीः ॥
निर्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः ।
मनस्त्यजति दौरात्म्यं चिन्तितस्यानुचिन्तया ॥
निर्वेद आशापाशानां पुरुषस्य यथा ह्यसिः ।
न ह्यङ्गाजातनिर्वेदो देहबन्धं जिहासति ॥
अदर्शनमनाघ्राणमस्पर्शाश्रवणे तथा ।
पुरुषो नियमैश्चैतैः श्रेयः प्राप्नोत्यनुत्तमम् ॥
सुमहान्त्यपि शास्त्राणि धारयन्ते बहून्यपि ।
संच्छेत्तारः संशयानां लोभग्रस्ताः पतन्त्यधः ॥
सर्वभूतेष्वविश्वस्तः सर्वभूतेषु निर्दयः ।
सर्वभूतेषु जिह्मश्च लोभाद्भवति भारत ॥
लोभक्षये क्षयं यान्ति सर्वपापानि भारत ।
लोभवृद्धौ च वर्धन्ते नृपते नात्र संशयः ॥
लोभात्क्रोधः प्रभवति लोभाद्द्रोहः प्रवर्तते ।
लोभान्मोहश्च माया च मानस्तत्सर्व एव च ॥
सर्वसङ्गपरित्यागः सर्वद्वंद्वसहिष्णुता ।
सर्वभूतसमत्वं च मोक्षस्य विधिपुत्रक ॥
जीवितं यस्य धर्मार्थं धर्मो ज्ञानार्थमेव च ।
ज्ञानं च ध्यानयोगार्थं सोऽचिरान्मुच्यते नरः ॥
निगृहीतेन्द्रियग्रामो यत्र यत्र वसेद्बुधः ।
तत्र तत्र कुरुक्षेत्रं प्रयागं पुष्कराणि च ॥
यत्र रागादिरहिता वासुदेवपरायणाः ।
तत्र संनिहितो विष्णुर्यतस्तीर्थमयो हि सः ॥
किं तस्य बहुभिस्तीर्थैः स्नानहोमजपव्रतैः ।
येनेन्द्रियगणो घोरो निर्जितोऽन्यैर्दुरासदः ॥
जितेन्द्रियः समः शान्तः सर्वभूतहिते रतः ।
वासुदेवपरो नित्यं न क्लेशं कर्तुमर्हति ॥
इदं तीर्थमिदं नेति ये नरा भेददर्शिनः ।
तेषां विधीयते तीर्थं गमनं तत्फलानि च ॥

१ ग. घ. नास्ति स्ने॰ ।

सर्वं ब्रह्मेति यो वेत्ति न तीर्थं तस्य किंचन ।
जाग्रत्स्वप्नसुषुप्तेषु ब्रह्मण्येव स वर्तते ॥
सुयोनौ च वियोनौ च निजे कर्मणि यः शुचिः ।
तस्य कृच्छ्रगतस्यापि न पापे रमते मतिः ॥
अकर्तव्यं न कर्तव्यं प्राणैः कण्ठगतैरपि ।
किं विद्यया किं तपसा किं त्यागेन श्रुतेन वा ॥
किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनो हृतम् ।
कदाऽपि युवतीं भिक्षुर्न स्पृशेद्दारवीमपि ॥
स्पृशन्करीव बध्येत करिण्या अङ्गसङ्गतः ।
दृष्ट्वा स्त्रियं देवमायां तद्भावैरजितेन्द्रियः ॥
प्रलोभितः पतत्यन्धे तमस्यग्नौ पतङ्गवत् ।
ग्राम्यगीतं न शृणुयाद्यतिर्वनचरः क्वचित् ॥
शिक्षेत हरिणाद्बद्धान्मृगयोर्गीतमोहितात् ।
सुखमैन्द्रियकं राजन्स्वर्गे नरक एव च ॥
देहिनां यद्यथा दुःखं तस्मान्नेच्छेत तद्बुधः ।
योषिद्धिरण्याभरणाम्बरादिद्रव्येषु मायारचितेषु मूढः ।
प्रलोभितात्मा ह्युपभोगबुद्ध्या पतङ्गवन्नश्यति नष्टदृष्टिः ॥
यदस्थिभिर्निर्मितवंशवश्यं स्थूणं त्वचा रोमनखैः पिनद्धम् ।
क्षरन्नवद्वारमगारमेतद्विण्मूत्रपूर्णं मदुपैति काऽन्या ॥
न संभाषेत्स्त्रियं कांचित्पूर्वदृष्टां न च स्मरेत् ।
कथां वा वर्जयेत्तासां न पश्येल्लिखितामपि ॥
माद्यति प्रमदां दृष्ट्वा सुरां पीत्वा च माद्यति ।
तस्माद्दृष्टिमदां नारीं दूरतः परिवर्जयेत् ॥
संभाषणं सह स्त्रीभिरालापप्रेक्षणे तथा ।
नृत्यं गानं सभासेवापरिवादांश्च वर्जयेत् ॥
सुजीर्णोऽपि सुजीर्णासु विद्वान्स्त्रीषु न विश्वसेत् ।
सुजीर्णास्वपि कन्थासु सज्जते जीर्णमम्बरम् ॥
अग्निकुण्डसमा नारी घृतकुम्भसमो नरः ।
परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् ॥
विश्वमेकात्मकं पश्यन्प्रकृत्या पुरुषेण तु ।

१ क. ख. वीजे । २ ख. ˚वंशावंश्यं । ३ घ. ˚मदा नारी ययेदं मोहितं जगत् । ४ घ. ˚कुण्डस˚

परस्वभावकर्माणि यः प्रशंसति निन्दति ।
स आशु भ्रश्यते स्वार्थादसत्य( त्या )भिनिवेशतः ॥
न स्तुवीत न निन्देत कुर्वतः साध्वसाधु वा ।
वदतो गुणदोषाभ्यां वर्जितः समदृङ्मुनिः ॥
न कुर्यान्न स्तुवेत्(स्तुयात्)किंचिन्न ध्यायेत्साध्वसाधु वा ।
आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः ॥
दोषदर्शी भवेत्तत्र यत्र रागः प्रवर्तते ।
अनिष्टवर्द्धितं पश्येत्तथा क्षिप्रं विरज्यते ॥
यदा न कुरुते भावं सर्वभूतेषु पापकम् ।
समदृष्टेस्तदा पुंसः सर्वाः सुखमया दिशः ॥
यथा न पीड्यते कायो नैवान्तकवशं व्रजेत् ।
तथा धर्मं चरेद्भिक्षुः पश्यन्वै शास्त्रचक्षुषा ॥
नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः ।
विजानन्न च मेधावी जडवल्लोक आचरेत् ॥
एकाकी निस्पृहस्तिष्ठेन्न केनापि सहायते ।
दद्यान्नारायणेत्येवं प्रतिवाक्यं सदा यतिः ॥
वासे बहूनां कलहो भवेद्वार्ता द्वयोरपि ।
एकाकी विचरेद्भिक्षुः स्वधर्मपरिपालकः ॥
इष्टानिष्टेषु भोगेषु व्यसनाभ्युदयेषु च ।
उपशान्तां वदेद्वाचमपि बाणैर्हतो भृशम् ॥
यथा मूको यथा मूढो यथा बधिर एव वा ।
तथा वर्तेत लोकेषु स्वसामर्थ्यस्य गुप्तये ॥
एक एव चरेन्नित्यमनग्निरनिकेतनः ।
सिद्ध्यर्थमसहायः स्याद्ग्राममन्नार्थमाश्रयेत् ॥
असन्मानात्तपोवृद्धिः सन्मानात्तपसः क्षयः ।
अर्चितः पूजितो विप्रो दुग्धा गौरिव सीदति ॥
मानापमानौ द्वावेतौ प्रीत्युद्वेगकरौ नृणाम् ।
तावेव विपरीतार्थौ योगिनः सिद्धिकारकौ ॥
न सुखं देवराजस्य न सुखं चक्रवर्तिनः ।
यादृशं वीतरागस्य मुनेरेकान्तवासिनः ॥

१ क. °ल्लोकमा° । २ क. ग. गच्छात ।

रथ्यायां बहुवस्त्राणि भिक्षा सर्वत्र लभ्यते ।
भूमिशय्या सुविस्तीर्णा यतयः केन दुःखिताः ॥
नासमानसहायेषु निवसेद्योगवित्क्वचित् ।
वसेत्समानशीलेषु सुशीलेषु तपस्विषु ॥
बुधो बालकवत्क्रीडेत्कुशलो जडवच्चरेत् ।
वदेदुन्मत्तवद्विद्वान्गोचर्यां नैगमश्चरेत् ॥
वेदवादरतो न स्यान्न पाखण्डी न हैतुकः[1] ।
शुष्कवादविवादे न कंचित्पक्षं समाश्रयेत् ॥
आत्मवत्सर्वभूतानि पश्यन्भिक्षुश्चरेन्महीम् ।
अन्धवत्कुब्जवच्चापि बधिरोन्मत्तमूकवत् ॥
नात्यर्थं सुखदुःखाभ्यां शरीरमुपतापयेत् ।
स्तूयमाने न तुष्येत निन्दितो न शपेत्परान् ॥
एक एव चरेन्नित्यं सिद्ध्यर्थमसहायवान् ।
सिद्धिरेकस्य संपश्यन्न जहाति न हीयते ॥
नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निदेशं भृतको यथा ॥
गूढधर्माश्रितो विद्वानज्ञानचरितं चरेत् ।
संदिग्धः सर्वभूतानां वर्णाश्रमविवर्जितः ॥
ब्रह्मचर्यमहिंसा च सत्यमस्तेयमार्जवम् ।
वेदान्तश्रवणं ध्यानं भिक्षोः कर्माणि नित्यशः ॥
भिक्षाटनं जपो ध्यानं स्नानं शौचं सुरार्चनम् ।
कर्तव्यानि षडेतानि यतीनां नृपदण्डवत् ॥
मौनं योगासनं योगस्तितिक्षैकान्तशीलता ।
निस्पृहत्वं समत्वं च सप्तैतान्येकदण्डिनाम् ॥
लोकयात्रां प्रयत्नेन वर्जयेदात्मचिन्तकः ।
नान्योपनिषदं विद्यामभ्यसेन्मुक्तिहैतुकीम् ॥
अतिवादांस्तितिक्षेत नावमन्येत कंचन ।
न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥
द्रव्यस्त्रीमांससंपर्कान्मधुमाक्षिकलेहनात् ।
विचारस्य परित्यागाद्यतिः पतनमृच्छति ॥

---

१ घ. हेतुकः ।

क्रोधलोभपरो नित्यं निद्रालस्यपरस्तथा ।
विषादीच्छापरश्चैव[1] श्रेयसो भ्रश्यते द्विजः ॥
आरूढपतितो हन्ति दश पूर्वान्दशापरान्[2] ।
विस्तारयति तानेव यदि सम्यग्व्यवस्थितः ॥
देशलोकसुहृन्मित्रपिण्डप्राणमनोधियाम् ।
पूर्वं पूर्वं त्यजेत्पश्चात्परमानन्दमाविशेत् ॥
यः प्रव्रज्य गृहात्पूर्वं त्रिवर्गो वपनात्पुनः ।
यदि सेवेत तान्भिक्षुः स वै वान्ताश्यपत्रपः ॥
यैः स्वदेहः स्मृतोऽनात्मा मर्त्यो विट्कृमिभस्मवान् ।
त एनमात्मसात्कृत्वा श्लाघयन्ति ह्यसत्तमाः ॥
नाध्येतव्यं न वक्तव्यं न श्रोतव्यं कदाचन ।
एभिर्गुणैश्च संपन्नो यतिर्भवति नेतरः ॥
नैव धर्मी न चाधर्मी न चापीह शुभाशुभी ।
भिक्षाशी सर्ववर्णेषु तुल्यनिन्दास्तुतिः क्षमी ॥
निस्तरङ्गवदम्भोधिः स्थितधीः सर्वदाऽऽत्मवान् ।
समः सर्वेषु भूतेषु परहंसः स उच्यते ॥
प्राणा यथाऽऽत्मनोऽभीष्टा भूतानामपि ते तथा ।
आत्मौपम्येन सर्वत्र दयां कुर्वीत मानवः ॥
मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः ।
तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ॥
इज्याचारदमाहिंसाजपस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम् ॥
सत्यमस्तेयमक्रोधो ह्रीः शौचं धीर्धृतिर्दमः ।
संयतेन्द्रियता विद्या धर्मः सर्व उदाहृतः ॥
द्वावेतौ न विराजेते विपरीतेन कर्मणा ।
निरारम्भो गृहस्थश्च कार्यवांश्चैव भिक्षुकः ॥
कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्यं तपः शमः ।
क्षमा दया च संतोषो व्रतान्यस्य विशेषतः ॥

१ क. °र्दा चाप° । २ क. न् । निस्ता° ।

येन केनचिदाच्छन्नो येन केनचिदाशितः ।
यत्रक्कचनशायी स्यात्तं देवा ब्राह्मणं विदुः ॥
कन्थाकौपीनवासाश्च दण्डधृग्ध्यानतत्परः ।
एकाकी रमते नित्यं तं देवा ब्राह्मणं विदुः ॥
स्वप्नेऽपि यो हि युक्तः स्याज्जाग्रतीव विशेषतः ।
ईदृक्चेष्टः स्मृतः श्रेष्ठो वरिष्ठो ब्रह्मवादिनाम् ॥
सर्वमन्यत्परित्यज्य बुध्या तन्निष्ठतां गतः ।
उपविष्टो व्रजंस्तिष्ठंस्तन्मयः स्यात्समाहितः ॥
ब्रह्मनिष्ठो भवेन्नित्यं यः परिव्राडतन्द्रितः ।
स ब्रह्म परमं ह्येर्ति[1] न चेहाऽऽजायते पुनः ॥
सर्वकर्माणि संन्यस्य भिक्षाशी निष्परिग्रहः ।
प्राप्नोति मम सायुज्यं गुह्यमेतन्मयोदितम् ॥
सम्यग्दर्शनसंपन्नः कर्मणा न स बध्यते ।
दर्शनेन विहीनस्तु संसारं प्रतिपद्यते ॥

"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" [ क० श्रु० २।३।१४ ]। "अशरीरꣳ शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति" [ क० श्रु० १।२।२२ ]। 'प्रजहाति यदा कामान्०' 'आत्मन्ये वा०' [ अ० २ श्लो० ५५ ]। 'दुःखेष्वनुद्विग्नमना०' [ अ० २ श्लो० ५६ ]। 'यः सर्वत्रा०' [ अ० २ श्लो० ५७ ]। "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तत्" [बृ०४।४।२१]। यदैतमनु पश्यत्यात्मानं देवमञ्जसा। ईशानं भूतभव्यस्य न ततो विजुगुप्सते [ बृ० ४।४।१५ ]।

वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि ।
एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते ॥
त्यक्त्वा लोकांश्च वेदांश्च विषयानिन्द्रियाणि च ।
आत्मन्येव स्थितो यस्तु प्राप्नोति परमं पदम् ॥
कुटुम्बपुत्रदारांश्च वेदाङ्गानि च सर्वशः ।
यज्ञं यज्ञोपवीतं च त्यक्त्वा गूढश्चरेन्मुनिः ॥

१ ग. ॰ति परमं जा॰।

त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥
यावतः कुरुते जन्तुः संबन्धान्मनसः प्रियान् ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥
कर्मणां परिणामित्वादाविरञ्चादमङ्गलम् ।
विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥
त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धुषु ।
मय्यावेश्य मनः सम्यक्समदृग्विचरस्व गाम् ॥
यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः ।
नश्वरं गृह्यमाणं च विद्धि मायामनोमयम् ॥
सर्वभूतसुहृच्छान्तो ज्ञानविज्ञाननिश्चयः ।
पश्यन्मदात्मकं[1] विश्वं न विपद्येत वै पुनः ॥
अल्पान्नाभ्यवहारेण रहःस्थानासनेन च ।
ह्रियमाणानि विषयैरिन्द्रियाणि निरोधयेत् ॥
इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च ।
अहिंसया च भूतानाममृतत्वाय कल्पते ॥

नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च ।
शीलं स्थितिर्दण्डनिधानमार्जवं ततस्तश्चोपरमः क्रियाभ्यः ॥
*अर्थस्य मूलं निकृतिः[2] क्षमा च कामस्य रूपं च वयो वपुश्च ।
धर्मस्य[3] यागादि दया दमश्च मोक्षस्य सर्वोपरमः क्रियाभ्यः ॥
अरण्यनिष्ठस्य जितेन्द्रियस्य सर्वेन्द्रियप्रीतिनिवर्तकस्य ।
अध्यात्मचिन्तागतमानसस्य ध्रुवा ह्यनावृत्तिरुपेक्षकस्य ॥
विनष्टलोभा विषयेषु निस्पृहाः प्रशान्तचित्ताः परिहीनमत्सराः ।
व्रजन्ति विष्णोः परमेव तत्पदं सनातनं यत्प्रवदन्ति सन्तः ॥
अहिंसकाः क्षान्तिपरायणाः शुभे सुखेषु दुःखेषु समानबुद्धयः ।
ऋजुस्वभावा विषयेषु निस्पृहास्तरन्ति संसारसमुद्रमश्रमम् ॥
निःसङ्गता मुक्तिपदं यतीनां सङ्गादशेषाः प्रभवन्ति दोषाः ।
आरूढयोगोऽपि निपात्यतेऽधः सङ्गेन योगी किमुताल्पसिद्धिः ॥

* अयं श्लोको घ. पुस्तके नास्ति ।

१ घ. ॰त्मको वि॰ । २ क. निवृत्तिः । ३ क. ॰स्य योगा॰ ।

मन्येऽकुतश्चिद्भयमच्युतस्य पादाम्बुजोपासनमत्र नित्यम् ।
उद्विग्नबुद्धेरसदात्मभावाद्विश्वात्मना यत्र निवर्तते भीः ॥

न कामकर्मबीजानां यस्य चेतसि संभवः ।
वासुदेवैकनिलयः स वै भागवतोत्तमः ॥
न यस्य जन्मकर्मभ्यां न वर्णाश्रमजातिभिः ।
सज्जतेऽस्मिन्नहंभावो देहे वै स हरेः प्रियः ॥
न यस्य स्वः पर इति चित्ते स्वात्मनि वा भिदा ।
सर्वभूतसमः शान्तः स वै भागवतोत्तमः ॥

त्रिभुवनविभवहेतवेऽप्यकुण्ठ[1]स्मृतिरजितात्मसुरादिभिर्विमृग्यात् ।
न चलति भगवत्पदारविन्दाल्लवनिमिषार्धमपि यः स वैष्णवाग्र्यः ॥
भगवत उरुविक्रमाङ्घ्रिशाखानखमणिचन्द्रिकया निरस्ततापे ।
हृदि कथमुपसीदतां पुनः स प्रभवति चन्द्र इवोदितेऽर्कतापः ॥
विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः ।
प्रणयरशनया धृताङ्घ्रिपद्मः स भवति भागवतप्रधान उक्तः[2] ॥

कृष्णाङ्घ्रिपद्ममधुलिड्न पुनर्विनष्ट-
मायागुणेषु रमते वृजिनावहेषु ।
अन्यै[3]स्तु कामहत आत्मरजः प्रमार्ष्टु-
मीहेत कर्म यत एव रजः पुनः स्यात् ॥
विप्राद्द्विषड्गुणयुतादरविन्दनाभ-
पादारविन्दविमुखाच्छ्वपचं वरिष्ठम् ।
मन्ये तदर्पितमनोवचनेहितार्थ-
प्राणं पुनाति स कुलं न तु भूरिमानः ॥
यत्पादपङ्कजपलाशविलासभक्त्या
कर्मा[4]शयं ग्रथितमुद्ग्रथयन्ति सन्तः ।
तद्वन्न रिक्तमतयो यतयो विरुद्ध-
स्रोतोगणास्तमरणं भज[5] वासुदेवम् ॥
घोरे कलियुगे प्राप्ते सर्वधर्मविवर्जिते ।
वासुदेवपरा राजंस्ते कृतार्था न संशयः ॥

---

१ क. °कुण्ठं स्मृ° । घ. कुण्ठः स्मृ° । २ घ. मुख्यः । ३ ग. अन्ये च । ४ क. °र्माश्रयं ।
५ घ. व्रज ।

इदानीं ध्यानप्रशंसा ।

ध्यानं नामाऽऽत्मप्रत्ययैकतानसंततानुवृत्तिः । तस्या आदरनैरन्तर्यदीर्घकालाभ्यासोपपत्तेः । तदुक्तम्—अखण्डदण्डायमानसच्चित्सुखाद्वयब्रह्मैकाकारान्तःकरणवृत्तिर्ध्यानमिति । तच्च द्विविधम् ।

ध्यानं तु द्विविधं प्रोक्तं सगुणं निर्गुणं तथा ।
सगुणं सर्वभेदेन निर्गुणं केवलं स्मृतम् ॥
ध्यानेनेत्थं सुतीव्रेण युञ्जतो योगिनो मनः ।
संयास्यत्याशु निर्वाणं द्रव्यज्ञानक्रियाभ्रमः ।
विषयान्ध्यायतश्चित्तं विषयेषु विसज्जते ॥
मामनुस्मरतश्चित्तं मय्येव प्रविलीयते ।
यत्र यत्र मनो देही धारयेत्सकलं धिया ॥
स्नेहाद्वेषाद्भयाद्वाऽपि याति तत्तत्स्वरूपताम् ।
क्षणं ब्रह्माहमस्मीति यः कुर्यादात्मचिन्तनम् ॥
स सर्वपातकं हन्ति तमः सूर्योदयो यथा ।
अहमेव परं ब्रह्म वासुदेवाख्यमव्ययम् ॥
इति स्यान्निश्चितो मुक्तो बद्ध एवान्यथा भवेत् ।
आदिमध्यान्तमुक्तोऽहं न बद्धोऽहं कदाचन ॥
स्वभावनिर्मलः शुद्ध इति मे निश्चिता मतिः ।
यो नित्यमध्यात्ममयो नित्यमन्तर्मुखः सुखी ॥
नित्यं चिदनुसंधानो न स शोकेन बाध्यते ।
भ्रमस्य जागतस्यास्य जातस्याऽऽकाशवर्णवत् ॥
अपुनःस्मरणं साधो मन्ये विस्मरणं वरम् ।
यत्किंचिदपि संकल्प्य नरो दुःखे निमज्जति ॥
न किंचिदपि संकल्प्य सुखमक्षयमश्नुते ।
यदा न भाव्यते किंचिद्धेयोपादेयरूपि यत् ॥
स्थीयते सकलं त्यक्त्वा तदा चित्तं न जायते ।
एतज्ज्ञानं परं प्रोक्तं पूजैषैव परा स्मृता ॥
यदनारतमन्तस्थं शुद्धचिन्मात्रवेदनम् ।
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ॥
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ।

---

१ व. °णं स्वर्ण भे । श्र. णं वर्णभे° । २ घ. नः । स या° । ३ घ. भ्रमेण । ४ क. ग. जाग्रत° ।

स हि सर्वैर्विजिज्ञास्य आत्मैवाऽऽश्रमवर्तिभिः ॥
श्रोतव्यस्त्वथ मन्तव्यो द्रष्टव्यश्च प्रयत्नतः ।
आत्मज्ञानेन मुक्तिः स्यात्तच्च योगादृते नहि ॥
स च योगश्चिरं कालमभ्यासादेव सिध्यति ।
नारण्यसंश्रयाद्योगो न नानाग्रन्थवेदनात् ॥
न दानैर्न व्रतैर्वाऽपि न तपोभिर्न वा मखैः ।
न च पद्मासनाद्योगो न च नासाग्रवीक्षणात् ॥
न शौचेन न मौनेन न मन्त्राराधनैरपि ।
अभियोगात्सदाऽभ्यासात्तत्रैव च विनिश्चयात् ॥
पुनः पुनरनिर्वेदात्सिध्येद्योगो न चान्यथा ।
आत्मक्रीडस्य सततं सदाऽऽत्ममिथुनस्य च ॥
आत्मनैव[1] सुतृप्तस्य योगसिद्धिर्न दूरतः ।
आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ॥
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ।
एतज्ज्ञानं परं प्रोक्तं योगश्चैव परः स्मृतः ॥
सदा नारायणध्यानं सर्वशास्त्रप्रयोजनम् ।

ध्यानाधिकारमाह—युक्ताहारविहारस्य० ।

इन्द्रियाणीन्द्रियार्थेभ्यः प्रत्याहृत्य मनश्चलम् ॥
प्रत्यगात्मनि संस्थाप्य ध्यानं कुर्याद्यतिः सदा ।
त्यक्तसङ्गो जितक्रोधो लघ्वाहारो जितेन्द्रियः ॥
पिधाय[2] बुद्ध्या द्वाराणि मनो ध्याने निवेशयेत् ।
शून्येष्वेवावकाशेन गुहासु च वनेषु च ॥
नित्ययुक्तः[3] सदा योगी ध्यानं सम्यगुपक्रमेत् ।
भयं क्रोधमथाऽऽलस्यमतिस्वप्नातिजागरम् ॥
अत्याहारमनाहारं नित्यं योगी विवर्जयेत् ।

बाह्यचिन्तासर्वचिन्ताप्रयोजनमाह—

ध्यानात्पापानि नश्यन्ति ध्यानान्मोक्षं च विन्दति ।
ध्यानात्प्रसीदति हरिर्ध्यानं सर्वार्थसाधनम् ॥
ध्यानेन दह्यते स० । पुण्यपापफल० । क्षणं ब्रह्माहम० ॥

१ घ. °त्मन्येव । २ क. ग. विधाय । ३ ग. °त्यमुक्तः ।

यदि शैलसमं पापं विस्तीर्णं योजनान्बहून् ।
भिद्यते ध्यानयोगेन नान्यो भेदः कदाचन ॥
नित्यमभ्याससंयुक्तो हृदये यदि भावयेत् ।
तन्मयत्वमवाप्नोति कोशाङ्गोऽलीव कीटकः ॥
सर्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम् ।
द्विजस्तपस्वी भवति पङ्क्तिपावनपावनः ॥
ध्यानेन सदृशं नास्ति शोधनं पापकर्मणाम् ।
श्वपाकेष्वपि भुञ्जानो ध्यानेनैवं न लिप्यते ॥

कृष्णानुस्मरणादेव० । प्रायश्चित्तानि० ।

शृण्वन्नपि स्तुवन्नित्यं स्मरन्नपि युधिष्ठिर ।
महापातकजान्मर्त्यो मुच्यते सर्वकिल्बिषात् ॥
यथाऽग्निरुद्धतशिखः कक्षं दहति सानिलः ।
तथा चित्तस्थितो विष्णुर्नराणां सर्वकिल्बिषम् ॥
यद्बाल्ये यच्च कौमारे यत्पापं यौवने कृतम् ।
तत्पापमखिलं क्षिप्रं स्मृते विष्णौ प्रणश्यति ॥
ब्रह्महत्यासहस्राणि अगम्यागमनानि च ।
एकेन ध्यानयोगेन नश्यन्त्यन्यानि तत्क्षणात् ॥
अपिचेत्सुदुराचारो० ।
अश्वमेधसहस्रैस्तु वाजपेयशतैरपि ॥
यत्पापं विलयं याति स्मृते नश्यति तद्धरौ ।
गङ्गास्नानसहस्रैश्च पुष्करस्नानकोटिभिः ॥
यत्पापं विलयं याति० ।
यदि स्यात्पातकं किंचिद्योगी कुर्यात्प्रमादतः ॥
योगमेव निषेवेत नान्यं यत्नं कदाचन ।
उपपातकेषु सर्वेषु पातकेषु महत्सु च ॥
प्रविश्य रजनीपादं ब्रह्मध्यानं समाचरेत् ।
प्रायश्चित्तेषु सर्वेषु यतेर्ध्यानं विशिष्यते ॥
प्रणवस्य जपो वाऽथ मूलमन्त्रश्च संस्मृतः ।
जपाज्ज्ञानात्तथा ध्यानान्नान्यद्भिक्षोस्तु साधनम् ॥
तस्मात्तानि सदा कुर्याद्यतिः शुद्ध्यर्थमात्मनः ।
ज्ञानहृदे ध्यानजले० ॥

१ घ. तन्मय° । २ ङ. °व तु लि° ।

आत्मा नदी संयमतोयपूर्णा सत्यह्रदा ध्यानतटा दयोर्मिः ।
तत्राभिषेकं कुरु पाण्डुपुत्र न वारिणा शुध्यति चान्तरात्मा ॥
प्रपञ्चमखिलं यस्तु ज्ञानाग्नौ जुहुयाद्यतिः ।
आत्मन्यग्नीन्समारोप्य सोऽग्निहोत्री न चेतरः ॥
यस्मिञ्शान्तिः शमः शौचं सत्यं संतोष आर्जवम् ।
अकौटिल्यमदम्भित्वं स कैवल्याश्रमे वसेत् ॥
अतीतान्न स्मरेद्भोगान्न तथाऽनागतानपि ।
प्राप्तांश्च नाभिनन्देद्यः को न मुच्येत बन्धनात् ॥
बन्धमोक्षविभागज्ञो बन्धश्चेन्मोक्षणेच्छया ।
उपायान्वेषणे युक्तः को० ॥

अथ संन्यासाधिकारमाह—

ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ वा पुनः ।
विरक्तः सर्वकामेभ्यः पारिव्राज्यं समाहितः ॥
अन्धः पङ्गुर्दरिद्रो वा विरक्तः संन्यसेद्द्विजः ।
सर्वेषामेव वैराग्यं संन्यासे तु विधीयते ॥
संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया ।
प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः ॥
मुखजानामयं धर्मो वैष्णवं लिङ्गधारणम् ।
बाहुजातोरुजातानां नायं धर्मो विधीयते ॥

तत्र संन्यासस्य कृतार्थतामाह—

ये च संतानजा दोषा येऽपि स्युः कर्मसंभवाः ।
संन्यासस्तान्दहेद्दोषांस्तुषाग्निरिव काञ्चनम् ॥
अकार्यकारिणां दानं वेगो नद्याश्च शुद्धिकृत् ।
शोध्यस्य मृच्च तोयं च संन्यासोऽपि द्विजन्मनाम् ॥
षष्टिं कुलान्यतीतानि षष्टिमागामिकानि च ।
कुलान्युद्धरते प्राज्ञः संन्यस्तमिति यो वदेत् ॥

[*अथ समुच्चयोऽपि संन्यासे प्रतीयते ] केवलेन संन्यासेन न मुक्तिर्नापि केवलेन ज्ञानेनेति । यदि केवलेन ज्ञानेन मुक्तिस्तर्हि याज्ञवल्क्य-

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो ग. पुस्तके वर्तते ।

१ क. घ. 'थ के' ।

श्वेतकेतुप्रभृतीनां ज्ञानिनामपि संन्यासग्रहणानुपपत्तिः स्यात् । दृश्यते तस्मात्संन्यासज्ञानान्मुक्तिरित्येतदाहात्रिः—

न तावन्मुच्यते दुःखाज्जन्मसंसारबन्धनात् ।
यावन्न धारयेद्विप्रो वैष्णवं लिङ्गमुत्तमम् ॥
प्रत्यग्ध्वान्तसमुच्छेदि ज्ञानमैकात्म्यनिष्ठितम् ।
संन्याससाधनं प्रोक्तममृतत्वैकसाधनम् ॥
आत्मज्ञानं ससंन्यासं मोक्षायेत्यागमाच्छ्रुतम् ।
निःशेषकर्मसंन्यासं विद्यायाः साधनं श्रुतम् ॥
संन्याससाधनं ज्ञानं निर्वक्त्यत्रापि च श्रुतिः ।
योगाभ्यासरतः शान्तो निर्धूताशेषकल्मषः ॥
ब्रह्मविद्ब्रह्म भवति परिव्राडेव नेतरः ।
सर्वात्मनाऽपि सर्वेभ्यो विषयेभ्यो निवर्तनम् ॥
ब्रह्मविद्यासमायुक्तयतित्वं मुक्तिसाधनम् ।
यतित्वव्यतिरेकेण यो यतेत स मूढधीः ॥
दुःखात्यन्तनिवृत्तौ च विना वा ब्रह्मविद्यया ।

श्रुतिरपि—" वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोकेषु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे " [ मुण्डक० ३।६ ] । इदानीं श्रवणादिषु संन्यास्येवाधिकारी नान्य इति दर्शयन्नाह—

त्यक्ताशेषक्रियस्यैव संसारं प्रजिहासतः ।
जिज्ञासोरेव चैकात्म्यं त्र्यन्तेष्वधिकारिता ॥
सर्वसङ्गविनिर्मुक्तो मोक्षमात्रप्रयोजनः ।
अतोऽधिक्रियते प्रत्यग्ज्ञानोत्पत्तौ न रागवान् ॥

" नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसो वाऽपि प्रज्ञानेनैवमाप्नुयात् " [ क० २।२४ ]

आब्रह्मणोऽस्मात्संसाराच्छुद्धधीर्न विरज्यते ।
यावत्तावन्न विद्याया अधिकारी भवेन्नरः ॥
न निवर्तयितुं शक्तं रागाद्याकुलचेतसः ।
शास्त्रं विरक्तचित्तत्वान्न प्रवर्तयितुं क्षमम् ॥

१ क. °नमेकस्य निष्ठितम् । २ ग. निष्टताम् । ३ ग. °तंते । त्र्य° । ४ ग. °गाद्याकु° ।

यथा तथा परा ह्यत्र श्रुतयः सन्ति कोटिशः ।
ज्ञानाविरोधिनी यद्वत्प्रवृत्तिः सर्वकर्मणाम् ॥
सर्वकर्माण्यतस्त्यक्त्वा प्रत्यक्प्रवणबुद्धयः ।
मोहं भित्त्वाऽऽत्मसंबोधाद्ययुः कैवल्यमुत्तमम् ॥
जिज्ञासुरपि चैतस्य यथोक्तस्याऽऽत्मवस्तुनः ।
सर्वैषणानिवृत्त्यैव तज्ज्ञानं समवाप्नुयात् ॥

इदानीं यतिभिः श्रवणादावेवाऽऽदरः कार्यो नत्वन्यत्रेति कथयञ्छ्रवणाद्व्यतिरिक्तानुष्ठाने दोषानाह—

त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणाम् ।
श्रुत्या विधीयते यस्मात्तत्त्यागी पतितो भवेत् ॥
शिखासूत्रपरित्यागी वेदान्तश्रवणं विना ।
विद्यमानेऽपि संन्यासे पतत्येव न संशयः ॥
प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः ।
संन्यासिनोऽपि दृश्यन्ते दैवसंदूषिताशयाः ॥

कारकस्य करणेन तत्क्षणाद्द्विक्षुरेव पतितो भवेद्यथा ।
* व्यञ्जकस्य परिवर्जनात्तथा सद्य एव पतितो भवेदसौ ॥
अन्तरङ्गमपवर्गकाङ्क्षिभिः[3] कार्यमेव यतिभिः प्रयत्नतः ।
त्याज्यमेव बहिरङ्गसाधनं यत्नतः पतनभीरुभिर्भवेत् ॥
यच्छ्रुतं विविदु(दि)षोदयाय तत्सर्वमेव बहिरङ्गसाधनम् ।
अन्तरङ्गमवगच्छ तत्पुनर्यत्परावगतिसाधनं श्रुतम् ॥
यद्विकारकतयाऽवगम्यते दूरतस्तदिह साधनं धियः ।
अन्तरङ्गमखिलं तु तत्पुनर्व्यञ्जकं भवति यत्परात्मनः ॥
तस्मात्कर्म समस्तमेव तु भवेदिच्छाजनेः साधनं
शास्त्रेणोक्तमतः समस्तमपि तद्यत्नेन हेयं यतेः ।
द्रष्टव्यत्वमनूद्य साधनतया यत्तत्प्रतीचः श्रुतं
वेदान्तश्रवणादिकं भवति तत्कर्तव्यमावश्यकम् ॥

अथ संन्यासिनां महावाक्यविचारणमेव मुख्यो धर्म इत्याह—

---

* एतदर्धं क. पुस्तके नास्ति ।

१ ग. °ह. तत्त्वं प° । २ ग. °तो यथा भवेत् । ३ ग. °र्गसाधनं का° । ४ ग. °इयत्नतः सर्वया प° । ५ क. स्मृतम् ।

परिपूर्णचिद्रसघनः सततं स्वे महिम्नि तिष्ठस्यमले ।
न तथाऽपि तत्त्वमसिवाक्यकृतां मतिमन्तरेण तव केवलता ॥
पदार्थबोधं परिहृत्य वाक्यं न शक्तमात्मानुभवावसानम् ।
धियं समानेतुमपेक्षिततत्त्वावृतः स यत्नेन निरूपितोऽभूत् ॥

स्वाध्यायधर्मपठितं निजवेदशाखा-
वेदान्तभूमिगतमादरपालितं च ।
संन्यासिना परदृशा गुरुणोपदिष्टं
साक्षान्महावचनमेव विमुक्तिहेतुः॥
वेदान्तवाक्यमिह कारणमात्मबोधे
हेत्वन्तराणि परिपन्थिनिबर्हणानि ।
यज्ञादिकानि दुरितं क्षपयन्ति बुद्धे-
स्तत्त्वंपदार्थविषयं तम उत्तराणि ॥

नित्यबोधपरिपीडितं जगद्विभ्रमं नुदति वाक्यजा मतिः ।
वासुदेवनिहतं धनंजयो हन्ति कौरवकुलं यथा पुनः ॥
अनाद्यविद्यापटनेत्रबन्धनं प्रसज्य वेदान्तनिबन्धना मतिः ।
स्वजन्ममात्रेण दृढात्मगोचरा समूलदाहं दहतीति हि श्रुतिः ॥

वेदान्तवाक्यजनिता मतिवृत्तिरेव-
मुत्पत्तितः सकलमेव भवार्णवाम्भः ।
पीत्वा स्वयं च खलु शाम्यति दग्धलोहा
पीतं यथाऽम्बु चितिमेव तु शोषयित्वा ॥

पदार्थबोधेन कृतार्थता न ते मतिः परोक्षा हि पदार्थगोचरा ।
अतो महावाक्यनिबन्धनैव धीरबोधविच्छेदकरी भविष्यति ॥

वाक्योत्थापितबुद्धिवृत्तिरमला यज्ञादिभिर्निश्चला
वेदान्तश्रवणादिभिः स्फटिकवत्स्वच्छा सती तावकम् ।
रूपं दर्पणवद्विभाति परमं विष्णोः पदं संनिधे-
रेतस्मादिह कारणादथ भवेत्संसारबीजक्षयः ॥

श्रवणादिकं शमदमादिपरः परमात्मनः परमभागवतः ।
कुरु तावता परममेव पदं परमात्मनस्त्वमवलोकयसि ॥

संसारदोषमवधारयतो यथाव-
द्वैराग्यमुद्भवति चेतसि निष्प्रकम्पम् ।

---

१ ग. °साने । धि° । २ ग. °तः प्रय° । ३ घ. चुदति । ४ घ. °तिः । सा अ° ।

वैराग्यजन्मनि दृढे च सति प्रवृत्ति-
स्तत्त्वंपदार्थपरिशोधनकर्मणि स्यात् ॥

तत्त्वमस्यादिवाक्योत्थं यत् ।

जन्मान्तरेषु यदि साधनज्ञानमासी-
त्संन्यासपूर्वकमिदं श्रवणादिरूपम् ।
विद्यामवाप्स्यति ततः सकलोऽपि यत्र
तत्राऽऽश्रमादिषु वसन्न निवारयामः ॥

अपि च परमहंसस्त्यक्तसर्वैषणः स-
न्ननुभवफलविद्यां साधनैर्यद्यवाप ।
कथमिव पुनरस्य प्राप्तिरस्ति क्रियायां
भवतु तदपवर्गो विद्ययैवैकयाऽस्य ॥

सम्यग्ज्ञानध्वस्तसर्वप्रपञ्चः स्वीये रूपे निर्गुणे निर्विशेषे ।
पूर्णैश्वर्ये स्वप्रकाशस्वरूपे स्वाराज्येऽस्मिन्स स्वराडेव तिष्ठेत् ॥

तव रूपमेव[1] बत दुष्करं यदि तन्न पश्यसि[2] बहिर्मुखधीः ।
तव रूपमेव तव तृप्तिकरं यदि तत्प्रपश्यसि[3] निवर्त्य तमः ॥

विधयश्च कर्मविषयाः स्वतमःपटलावृते त्वयि बहिर्मनसि ।
कुत एव सम्यगवबोधहते तमसि प्रवृत्तिरिह संभवति ॥

अज्ञानतज्जमतिहीनतया सुषुप्तेः
शुद्धः परोऽसि भगवानसि नित्यमुक्तः ।
कामश्च कर्म सकलं च तदा कुतस्त्यं
चित्सागरेऽनवकरे[4] त्वयि तापमाने ॥

तव गाढमूढतमसा रचितं जगदीश जीववपुषा सकलम् ।
प्रतिभाति तावददृढं दृढवत्समुदेति यावदवबोधरविः ॥

पश्यामि चित्रमिव सर्वमिदं द्वितीयं
तिष्ठामि निष्कलचिदेकवपुष्यनन्ते[5] ।
आत्मानमद्वयमनन्तसुखैकरूपं
पश्यामि दग्धरशनामिव च प्रपञ्चम् ॥

१ ग. °व तव दुःखकरं । २ ग. °श्यति ब° । ३ घ. °श्यति नि° । ४ क. ग. °वसरे त्व° ।
५ क. ग. °करसं वपुष्ये । आ° ।

नित्यः शुद्धो बुद्धमुक्तस्वभावः
सत्यः सूक्ष्मः सद्विभुश्चाद्वितीयः ।
आनन्दाद्धिर्यः परः सोऽहमस्मि
प्रत्यग्धातुर्नात्र संभीतिरस्ति ॥

इदानीं श्रवणादिप्रशंसा—

किं तीर्थैः किं प्रदानैर्वा किं यज्ञैः किमुपोषितैः ।
अहन्यहनि तं देवं तन्मयत्वेन शृण्वताम् ॥
वैष्णवं चरितं पुण्यमायुरारोग्यपुष्टिदम् ।
पठतः शृण्वतो वाऽपि सर्वपापं व्यपोहति ॥
श्रवणान्मननाच्चैव निदिध्यासनतस्तथा ।
आराध्यं सर्वदा ब्रह्म पुरुषेण हितैषिणा ॥
मत्कथावाचकं नित्यं मत्कथाश्रवणे रतम् ।
मत्कथाप्रीतिमनसं नाहं त्यक्ष्यामि तं नरम् ॥
नाहं वसामि वैकुण्ठे योगिनां हृदये रवौ ।
मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ॥
दद्यान्नावसरं किंचित्कामादीनां मनागपि ।
आ सुप्तेरा मृतेः कालं नयेद्वेदान्तचिन्तया ॥

अथ श्रवणमर्यादाकालमाह—

यावदेवाऽऽत्मविज्ञानमेतदाभासवर्जितम् ।
सुनिश्चितं भवेत्तावच्छ्रवणादिव्रतो भवेत् ॥
अहं ब्रह्मेतिवाक्यार्थबोधो यावद्दृढो भवेत् ।
शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम् ॥
तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥
यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
रागो लिङ्गमबोधस्य चित्तव्यायामभूमिषु ॥
कुतः शाड्वलता तस्य यस्याग्निः कोटरे तरोः ।
रागाक्रान्ते कुतः स्वान्ते ब्रह्मविद्यालवाङ्कुरः ॥
स्फीतानिलाकुले देशे किं दीपकलिकोदयः ।
ब्राह्मण्याद्यात्मके देहेऽनात्मन्यात्मेति भावना ॥

श्रुतेः किंकरतामेति वाङ्मनःकायकर्मसु ।
दग्ध्वाऽखिलाधिकारश्चेद्ब्रह्मज्ञानाग्निना मुनिः ॥
वर्तमानः श्रुतेर्मूर्ध्नि नैव स्याद्विधिकिंकरः ।
द्वैतभावो हि दुःखाय सुखायाद्वैतभावना ॥
भारायान्नं पृथग्भूतं भुक्तमन्नं सुखावहम् ।
तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् ॥
येनाऽऽशां पृष्ठतः कृत्वा वैराग्यमवलम्बितम् ।

इदानीं महावाक्यार्थविचारानन्तरं परिणतान्तःकरणानां जीवन्मुक्तानां लक्षणमाह—

ज्ञातज्ञेयस्य मनसो नूनमेतद्धि लक्षणम् ।
न स्वदन्ते समग्राणि भोगवृन्दानि यत्पुनः ॥
उत्पन्नात्मावबोधस्य अद्वेष्टृत्वादयो गुणाः ।
अयत्नतो भवन्त्यस्य न तु साधनरूपिणः ॥
दोषबुद्ध्योभयातीतो निषेधान्न निवर्तते ।
गुणबुद्ध्या च विहितं न करोति यथाऽर्भकः ॥
ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ।
नैवास्ति किंचित्कर्तव्यमस्तिचेन्न स तत्त्ववित् ॥
संतोषामृततृप्तानां यत्सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥
यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।

न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः । [ गी०अ०३श्लो०१८ ] ।

न प्रहृष्येत्प्रियं प्राप्य० [ गी०अ०५श्लो०२० ] । यतेन्द्रियमनोबुद्धि० या निशा सर्वभूतानां । प्रजहाति यदा० । " आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन्कस्य कामाय शरीमनुसंज्वरेत् । " [ बृ० ४।४।१२] । " यत्र त्वस्य सर्वमात्मैवाभूत्तत्के० " [ बृ०२।४।१४] ।

देहं च नश्वरमव० । देहोऽपि दैववश० । तिष्ठन्तमासीनमुपव्रजन्तं श० ।

---

१ क. श्रुतिः कि° । २ घ. नश्यद° ।

त्यक्त्वैषणात्रयमवेक्षितमोक्षमार्गा
भैक्षामृतेन परिकल्पितदेहयात्राः ।
ज्योतिः परात्परतरं परमात्मसंज्ञं
धन्या द्विजा रहसि हृद्यवलोकयन्ति ॥

किं कृत्यं किमकृत्यं किं करणीयं किमप्यकरणीयम् ।
किं चिन्त्यं किमचिन्त्यं निखिलमिदं विजानतां विदुषाम् ॥

एतावदेव खलु लिङ्गमलिङ्गमूर्तेः
संशान्तसंसृतिचिरभ्रमनिर्वृतस्य ।
[1]तज्ज्ञस्य यन्मदनकोपविषादमोह-
लोभापदामनुदिनं निपुणं तनुत्वम् ॥

न प्रीतिर्विषयेष्वस्ति प्रेयानात्मेति जानताम् ।
कुतो रागः कुतो द्वेषः प्रातिकूल्यमपश्यतः ॥
दर्शनादर्शने हित्वा स्वयं केवलरूपतः ।
यस्तिष्ठति स तु ब्रह्मन्ब्रह्म न ब्रह्मवित्स्वयम् ॥
नैष्कर्म्येण न तस्यार्थो न तस्यार्थोऽस्ति कर्मभिः ।
न [2]समाधानजप्याभ्यां यस्य निर्वासनं मनः ।
आत्माऽसङ्गस्ततोऽन्यत्स्यादिन्द्रजालमिदं जगत् ॥
इत्यचञ्चलनिर्णीते कुतो मनसि वासना ।
न सुखानि न दुःखानि न मित्राणि न बान्धवाः ॥
न जीवितं न मरणं बन्धाय ज्ञस्य चेतसः ।
यथास्थितमिदं यस्य व्यवहारवतोऽपि च ॥
अस्तं गतं स्थितं व्योम स जीवन्मुक्त उच्यते ।
नोदेति नास्तमायाति सुखे दुःखे मुखप्रभा ॥
यथाप्राप्तस्थितेर्यस्य स जी० ।
यो जागर्ति सुषुप्तिस्थो यस्य जाग्रन्न विद्यते ॥
यस्य निर्वासनो बोधः स जी० ।
यथा विपणिगा लोका विहरन्तोऽप्यसत्समाः ॥
असंबन्धात्तस्य चैव ग्रामोऽपि विपिनोपमः ।
अन्तर्मुखमना नित्यं सुप्तो बुद्धो व्रजन्पठन् ॥

१ क. घ. तज्ज्ञस्य । २ क. सध्यानजपाभ्यां ।

पुरंजनपदं ग्राममरण्यमिव पश्यति ।
न विस्मरति सर्वत्र यथा सततगो गतिम् ॥
न विस्मरत्यविरतं चिन्मात्रं प्राज्ञधीस्तथा ।
आत्मवानिह सर्वस्मादतीतो विगतैषणः ॥
आत्मन्येव हि संतुष्टो न करोति न चेहते ।
ये केचन जगद्भावास्तानविद्यामयान्विदुः ॥
कथं तेषु किलाऽऽत्मज्ञस्त्यक्ताविद्यो निमज्जति ।
यो हि यत्र विरक्तः स्यान्नासौ तस्मिन्प्रवर्तते ॥
लोकत्रयाद्विरक्तत्वान्मुमुक्षुः किमितीहते ।
अप्रमोत्थं प्रमोत्थेन ज्ञानं ज्ञानेन बाध्यते ॥
अहिरज्ज्वादिवद्बाधो देहाद्यात्ममतेस्तथा ।
ऐकात्म्यमात्रकूटस्थप्रबोधावसितेः कुतः ॥
मातृमानक्रियामेयव्यवहारस्य संभवः ।
आप्ताशेषपुमर्थस्य प्रत्यग्याथात्म्यबोधिनः ॥
दग्धात्मतमसः पुंसो नैषणापेक्षतेष्यते ।
क्षीरात्सर्पिर्यथोद्धृत्य क्षिप्तं तस्मिन्न पूर्ववत् ॥
बुद्ध्यादेर्ज्ञस्तथा सत्त्वान्न देही पूर्ववद्भवेत् ।
द्रष्टृदर्शनदृश्यादिभेदोऽविद्याप्रकल्पितः ॥
यतो मोहस्य विध्वस्तौ द्रष्टृदृश्यानि नेक्षते ।

ज्ञानिनां लक्षणमुक्त्वा तज्ज्ञानं कथं स्यादित्याशङ्कायामाह—

अमानित्वादिनिष्ठो यो यश्चाद्वेष्टादिसाधनः ।
ज्ञानमुत्पद्यते तस्य न बहिर्मुखचेतसः ॥

सिद्धिं प्राप्तो यथा ब्रह्मेत्यादिना चतुर्भिः ।

श्रद्धावाल्लँभते ज्ञानं० । संनियम्येन्द्रियग्रामं० । ते प्राप्नुवन्ति० । ज्ञानमुत्पद्यते पुंसां० । यथाऽऽदर्शतलप्रख्ये पश्यत्यात्मानमात्मनि । मलिनो हि यथाऽऽदर्शो० तथा विद्या० । यदा चित्तमस० । भवसीह त० । यावदज्ञानभावस्या० उदेति० । देशजात्यादि० । भा० ।

निःशेषकर्मसंन्यासं विद्यायाः साधनं श्रुतम् ।
संन्याससाधनं ज्ञानं निर्वक्त्यत्रापि च श्रुतिः ॥

१ घ. श्रुतेः ।

जिज्ञासुरपि चैतस्य यथोक्तस्याऽऽत्मवस्तुनः ।
सर्वैषणानिवृत्त्यैव तज्ज्ञानं समवाप्नुयात् ॥
आब्रह्मणोऽस्मात्संसाराच्छुद्धधीर्न विरज्यते ।
यावत्तावन्न विद्याया अधिकारी भवेन्नरः ॥
आशा चैवास्य विवशे चित्ते संतोषवर्जिते ।
म्लाने वक्त्रमिवाऽऽदर्शे न ज्ञानं प्रतिबिम्बति ॥
कोऽहं कथमिदं चेति यावन्न प्रविचारितम् ।
संसाराडम्बरं तावदन्धकारोपमं स्थितम् ॥
आत्मानमितरं चैव दृशा नित्यां[1]विभिन्नया ।
सर्वं चिज्ज्योतिरेवेति यः पश्यति स पश्यति ॥
कृशोऽतिदुःखी बद्धोऽहं हस्तपादादिमानहम् ।
इति भावानुरूपेण व्यवहारेण बध्यते ॥
नाहं दुःखी न मे देहो बन्धः कोऽस्याऽऽत्मनः स्थितः ।
इति भावानुरूपेण व्यवहारेण मुच्यते ॥
नाहं ब्रह्मेति संकल्पात्सुदृढाद्बध्यते मनः[2] ।
अहं ब्रह्मेतिसंकल्पात्सुदृढान्मुच्यते नरः ॥
अध्यासमात्रमेवेदं चिन्मात्रकमिदं जगत् ।
इत्यन्यकलनात्यागः सम्यगालोकनं विदुः ॥
सर्वं ब्रह्मेति यस्यान्तर्भावना सा विमुक्तिदा ।
भेदबुद्धिरविद्येयं सर्वथा तां परित्यजेत् ॥
यद्यज्ज्ञेयमहं तत्त्वं नेति संत्यज्य युक्तिभिः ।
प्राप्यावशिष्टं चिन्मात्रं तदेवास्मीति भावय ॥
नाहं न चान्यदस्त्वित्ति ब्रह्मैवास्ति निरामयम् ।
आनन्दरूपं सर्वं चेत्यनुद्वेगादुपास्यताम् ॥
अनन्ते चिद्घनानन्दे निर्विकल्पैकरूपिणि ।
स्थिते द्वितीयस्याभावात्को बद्धः कश्च मुच्यते ॥
न जायते न म्रियते क्वचित्किंचित्कदाचन ।
जगद्विवर्तरूपेण केवलं ब्रह्म जृम्भते ॥
सर्वमेवमिदं शान्तमादिमध्यान्तवर्जितम् ।
भावाभावविनिर्मुक्तमिति मत्वा सुखी भव ॥

१ क. ग 'त्यावाभे'। २ ग. जनः ।

परिज्ञानेन सर्पत्वं चित्रसर्पस्य नश्यति ।
यथा तथैव संसारः स्थित एवोपशाम्यति ॥
भोगवासनया बन्धो याति दार्ढ्यमवस्तुजः ।
तयोपशान्तया याति बन्धो जगति तानवम् ॥
परमं पौरुषं यत्नमादायाऽऽदाय सूद्यमम् ।
यथाशास्त्रमनुद्वेगमाचरन्को न सिद्धिभाक् ॥
यथाऽगाधनिधेर्लब्धौ नोपायः खननं विना ।
तल्लाभोऽपि तथा स्वात्मचिन्तां मुक्त्वा न चापरैः[1] ॥
इदं रम्यमिदं नेति बीजं ते दुःखसंततेः ।
तस्मिन्साम्याग्निना दग्धे दुःखस्यावसरः कुतः ॥
एतावदेवाविद्यात्वं नेदं ब्रह्मेति निश्चयः ।
*एष एव क्षयोऽस्या यत्सर्वं ब्रह्मेति निश्चयः ॥
शास्त्रार्थगुरुचेतोभिस्तावत्तावद्विचारयेत् ।
सर्वदृ[2]श्यक्षयाभ्यासाद्यावदासाद्यते परम् ॥
देहाद्यात्मत्व[3]विभ्रान्तो जाग्रत्यां न हठात्पुमान् ।
ब्रह्माऽऽत्मत्वेन विज्ञातुं क्षमते मन्दधीत्वतः ॥
अनात्मार्थप्रधानोऽयं यावदात्मा समीक्षते ।
ब्रह्मास्मीति न तावद्धीर्जायते[4] सान्तरायतः ॥
नारायणं सदा ध्यायेन्निराकारं निरञ्जनम् ।
अहं ब्रह्म विजानीयात्तेन मुच्येत बन्धनात् ॥
जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते ।
तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥
योऽयं स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव ।
ब्रह्मास्मीति धियाऽशेषा ह्यहंबुद्धिर्निवर्तते ॥
सर्वमेव चिदाकाशं ब्रह्मेति[5] घननिश्चये ।
स्थितिं याते शमं याति जीवो निःस्नेहदीपवत् ॥
समस्तमेव ब्रह्मेति भाविते ब्रह्म वै पुमान् ।
पीतेऽमृतेऽमृतमयः को नाम न भवेदिह ॥

* एतदर्धं क. ग. पुस्तकयोर्नास्ति ।

१ क. ग. °परः । इ° । २ क. सर्व दृ° । ३ घ. °द्यात्मनि विभ्रान्तौ । ४ क. घ. °सोऽन्त° । ५ ग. °ह्मे चिद्घन° ।

आकाशसदृशं सर्वं कल्पनामात्रजृम्भितम् ।
जगत्पश्य महाबुद्धे सुदीर्घं स्वप्नमुत्थितम् ॥
न बन्धोऽस्ति न मोक्षोऽस्ति ब्रह्मास्मीति निरामयम् ।
नैक्यमस्ति न च द्वित्वं संविदेव विजृम्भते ॥
एष एव मनोनाशस्त्वविद्यानाश एव च ।
यद्यत्संवेद्यते किंचित्तत्राऽऽस्थापरिवर्जनम् ॥
अहं परं ब्रह्म विनिश्चयात्मदृङ्-
न जायते भूय इति श्रुतेर्वचः ।
न चैव बीजे त्वसति प्रजायते
फलं न जन्मास्ति ततो ह्यमोहता* ॥
न रक्तमुल्बणं वासो न नीलं च प्रशस्यते ।
मलाक्तं च दशाहीनं वर्जयेदम्बरं यतिः+ ॥

" एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम [ मु० ३।२।४ ] संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः । ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाऽऽविशन्ति [ मु० ३। २।५ ] वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे [ मु० ३।२।६ ] गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु । कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकी भवन्ति । [ मु० ३।२।७ ] यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् । [ मु० ३।२।८ ] स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवति । तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति [ मु० ३।२।९ ] । तदेतदृचाऽभ्युक्तम्—क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः । तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम् [ मु०३।२।१० ] । तदेतत्सत्यमृषिरङ्गिराः पुरोवाच नैतदचीर्णव्रतोऽधीते । नमः परमऋषिभ्यो नमः परमऋषिभ्यः [ मु०३।२।११ ] । [ इति ] । मुण्डकोपनिषद्वाक्यम् ।

* अत्र घ. पुस्तकं समाप्तम् । + अत्र क. पुस्तकं समाप्तमग्रिमो ग्रन्थो ग. पुस्तक एव वर्तते ।

श्रोत्रियं च सदाचारं प्रत्याख्यायेन्न कर्हिचित् ।
प्रत्याख्यानेऽसद्वृत्तस्य प्रत्यवायो न विद्यते ॥

भिक्षाप्रकरणम् । " आचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये " इति च्छान्दोग्ये [ ६।१४।२ ]।

इति श्रीपरमहंसपरिव्राजकविश्वेश्वरसरस्वतीसंग्रथिते यतिधर्मसमुच्चये निवृत्तधर्मानुष्ठानाचाराः संपूर्णाः ।

इति विश्वेश्वरसरस्वतीकृतो यतिधर्मसंग्रहः ।

---